येषां वस्तुवशा वाचो न विवक्षापराश्रयाः ।
षष्ठीवचनभेदादिचोद्यं तान् प्रति युक्तिमत् ॥६७॥

यदि नामैते शब्दा पुरुषं क्वचित् प्रणिनीपिता अपि न शक्नुयुः प्रणेतुं वस्तुप्रतिबन्धाद् धूमादिवत्, तदाय उपालम्भः स्यात्—क्व षष्ठ्यादय इति ?

यदा पुनः —

यथा वाचकत्वेन वक्तृभिर्विनियम्यते ।
अनपेक्षितबाह्यार्थं तत्तथा वाचकं वचः ॥६८॥

न हि 'व्यतिरेके षष्ठी' 'बाहुल्ये जलादयः' इत्येतदपि पुरुषाभिप्रायनिरपेक्षं वस्तुतानिधिमात्रेण स्वयं प्रवृत्तम् । ते तु तत्र तथा प्रयुञ्जत इति ततस्तथाप्रतीतिर्भवति । एवमन्यत्रापि कथंचित् प्रयुक्ता य(त)थैव प्रतीतिहेतवो भवन्तीति किमुपालम्भः ?

तत्र वाच्येषु पुरुषायत्तवृत्तीनां शब्दानामवस्तुसंदर्शिनां यथाभ्यासं विकल्पप्रबोधहेतूनां प्रवृत्तिचिन्ता, तद्वशाद्वस्तुव्यवस्थापनं च केवलं जाड्यख्यापनम् ।

तथाकृतव्यवस्थाः शब्दा धर्मधर्म्यादिषु, न पुनर्व्यतिरेकवस्तुभेदादिति कुत एतत् ? तथाव्यवहारायोगात् । न हि धर्मधर्मिणोर्भेदे तत्त्वरूपत्वे वा[1] सामान्यतत्संबन्धसामानाधिकरण्यविशेषणविशेष्यभावा युज्यन्ते । शब्दानां वा, यथा वस्तुवृत्ताविति वक्ष्यामः ॥

यश्चायं सर्वत्र वस्तुकृतमेव शब्दप्रवृत्तिभेदमिच्छति, तस्य

दाराः षण्णगरीत्यादौ भेदाभेदव्यवस्थिते ।
तस्य स्वभावः सत्र वे[2]त्यत्र वा किं निबन्धनम् ॥६९॥

यदैकापि स्त्री दाराः, एकमपि सिकताद्रव्यं सिकता इति व्यवहारः, तत्र किं बाहुल्यं येनैवं भवति ? शक्तिभेद इति चेत् । सर्वेषां तत्त्वमिदानीमेकवचनम्, एकशक्तेरभावात् । यत्नश्च व्यर्थः । वस्तुभेदादन्यत्रैकवचनमिति चेत् । इहाप्यस्तु । तदयं निर्वस्तुको नियमं नियमानः स्वातन्त्र्यमिच्छाया शब्दप्रयोगे ख्यापयति ।

षण्णगरीति च कथं बहुष्वेकवचनम् ? न हि नगराख्यं [9b] किंचित् । कुतस्तेषां समाहारः ? प्रासादपुरुषादीनां विजातीयानामनारम्भात् कुतस्तत्समुदायो द्रव्य[म् ? अ]संयोगाच्च । न संयोगः । प्रासादस्य च स्वयं संयोगात्मकस्य परेणासंयोगाच्च । तत एव संख्याभावः । तत्संयोगपुरुषविशिष्टा सत्ता नगरमिति चेत् । किमस्या निरतिशयाया विशेषणम् ? सत्तायाश्चैकत्वात् नगरबहुत्वेऽपि नगराणीति बहुवचनं न स्यात् । द्वयस्य परस्परसहि[त]त्वेति चेत् । अनुपकार्योपकारकयोः कः सहायीभावः ? पुरुषसंयोगसत्तानां च बहुत्वान्नगरमिति कथमेकवचनम् ? तथाभूतानां क्वचिदर्थेऽभिधाशक्तिरस्ति । सा निमित्तमिति चेत् । न । शक्तेर्वस्तुरूपाऽव्यतिरेकात् । व्यतिरेके चाऽनुपकार्यस्य पारतन्त्र्यायोगादिति । उपकारे

[1] च—क०

[2] चैत्य—क०

वा शक्त्युपकारिण्या अपि शक्तेर्व्यतिरेक इत्यनवस्थितेरप्रतिपत्तिः । तदव्यतिरेके वा, आधायामपि प्रसङ्ग इति यत्किंचिदेतत् ।

सस्य स्वभाव सत्त्वमिति व्यतिरेकाश्रया षष्ठी न स्यात् । न हि तत्र सामान्यमस्ति । नापि विभुत्वादयो गुणास्तथोच्यन्ते, अर्थान्तरस्य तत्स्वभावत्वायोगात्, तेषां च निःस्वभावत्वप्रसङ्गात् । तस्याप्यर्थान्तरस्वभावत्वेऽतिप्रसङ्गः । तथा चाप्रतिपत्तिः ।

एवं षट्पदार्थसर्गादयोऽपि वाच्याः । न हि तत्र सामान्यं मत्वा सयोगो वा सम्भवति । कथमिदानीमसत्यतिशय 'सस्य स्वभाव' इति न क्षमित्येव । सस्यार्थान्तरसाधारणरूपाऽपरामर्शेन सशब्दप्रवृत्तिनिबन्धनं रूपं तथाजिज्ञासायामेवमुच्यते ।

ननु सर्वतो व्यावृत्तस्य रूपस्याभिधानं न सम्भवति । न चैतदेव रूपं बुद्धौ समर्प्यते, अनतीन्द्रियत्वप्रसङ्गात् । केवलमयं तथाभूतं प्रत्याययिष्यामीति शब्देन श्रोतर्यसंसृष्टतत्स्वभावं विकल्पप्रतिबिम्बमर्प्यते । यदाह "अदृष्टार्थेऽर्थविकल्पमात्रम्" इति । नैव प्रतिपाद्यप्रतिपादकाभ्यां स्वलक्षणं प्रतिपन्नं प्रतिपादितं वा भवति । स्वर्गादिश्रवणेऽपि तदनुभा(भ)विनामिव प्रतिभासाऽभेदप्रसङ्गात् ।

तस्मादयमप्रतिपद्यमानोऽपि भावस्वभावं तथाभूत एव विकल्पप्रतिबिम्बं तदध्यवसायी सन्तुष्यति । तथाभूतत्वादेव शब्दार्थप्रतिपत्तेः । तेनैतदेवमुच्यते स्वरूपमाहेति । न पुनः स्वरूपप्रतिभासस्यैव विज्ञानस्य जननात् ।

कथं तर्हीदानीमेकान्तव्यावृत्तरूपेषु भावेषु सामान्यं नाम तेषामसमर्पात्, अन्यस्यान्वा(स्य वा)भावात् ? उक्तं यादृशं सामान्यम्—असंसृष्टानामेकाऽसंसर्गस्तद्व्यतिरेकिणा समानं तति ।

अपि च—

पररूपं स्वरूपेण यया संव्रियते धिया ।
एकार्थप्रतिभासिन्या भावानाभित्य भेदिनः ॥७०॥
तया संवृतनानात्वाः (र्था) संवृत्या भेदिनः स्वयम् ।
अभेदिन इवाभान्ति भावा रूपेण केनचित् ॥७१॥
तस्या अभिप्रायवशात् सामान्यं सत् प्रकीर्त्तितम् ।
तदसत् परमार्थेन यथा संकल्पितं तया[1] ॥७२॥

बुद्धिः खलु तदन्यव्यतिरेकिणः पदार्थानाश्रित्योत्पद्यमाना विकल्पिका स्ववासनाप्रकृतिमनुविदधती भिन्नमेषां रूपं तिरोधाय प्रतिभासमभिन्नमात्मीयमध्यस्य तान् संसृजन्ती संदर्शयति । सा चैषां साध्यसाधनतया अन्यविवेकिनां भावानां तद्विकल्पवासनायाश्च प्रकृतिः यदेवमेषा प्रतिभाति । तदुद्भवा सा चैव संवृतिः संव्रियतेऽनया स्वरूपेण पररूपमिति । ते च तया संवृतभेदाः स्वयं भेदिनोऽप्यभेदिन इव केनचिद्रूपेण प्रतिभान्ति । तदेषां बुद्धिप्रतिभासमनुरुध्यानं [10a] बुद्धिपरिवर्त्तिनामेव भावानामाकारविशेषपरिग्रहाद्बहिरिव [2]स्फुरता सामान्यमित्युच्यते ।

[1] तथा—क०   [2] परिस्फुरतां—क०

कथमिदानीमन्यापोह सामान्यम् ? स एव खल्वन्यापोह । तमेव गृह्णती सा प्रकृतिविभ्रमात् विकल्पाना वस्तुग्राहिणीव च प्रतिभाति । सा हि तदन्यविवेकिष्वेव भावेषु भवन्ती विवेकविषयेति गम्यते ।

ननु बाह्या विवेकिन । न च तेषु विकल्पवृत्तिरिति कथ तेषु भवति ? व्याख्यातार एव विवेचयन्ति । न तु व्यवहर्तार । ते तु स्वालम्बनमेवार्थक्रियायोग्य मन्यमाना दृश्यविकल्प्यावर्थावेकीकृत्य प्रवर्तन्ते । तदभिप्रायवशादेवमुच्यते । तथा तत्कारितसाक्षात्कारिभ्यो भिन्नान् शब्देन प्रतिपादयन्ति वक्तार । तत्त्वचिन्तकास्तु प्रतिभासभेदादिभ्यो नाभेदमनुसन्धत्ते ।

यदि प्रतिपत्त्रभिप्रायोऽनुविधीयते तदा अन्यापोहोऽपि सामान्य मा भूत् । न ह्येव प्रतिपत्तिरिति । न वै केवलमेवमप्रतिपत्ति व्यक्तिव्यतिरिक्ताऽव्यतिरिक्तनित्यव्यापिताद्याकारैरपि न प्रतिपत्ति । केवलमभिन्नाकारा बुद्धिरुत्पद्यते । तस्या क आश्रय इत्यन्यापोह उच्यते । तस्य वस्तुषु भावादविरोधात् । व्यवहारस्य च शब्दाश्रयस्य तथादर्शनात् । न पुनर्वस्तुभूत किञ्चित् सामान्य नामास्ति यथेव बुद्धि प्रतिभाति । यस्माद्—

व्यक्तयो नानुयन्त्यन्यदनुयायि न भासते ।

न हीमा व्यक्तय परस्परमन्वाविशन्ति, भेदाभावेन सामान्यस्यैवाभावप्रसङ्गात् । अन्यच्च न ताभ्यो व्यतिरिक्त किञ्चित्तया बुद्धौ प्रतिभाति । अप्रतिभासमान च कथमात्मनाऽन्य ग्राहयेत्, व्यपदेशयेद्वा । न च तैस्सम्बद्धमेकमित्येव सामान्य भवत्यतिप्रसङ्गादित्युक्तम् । अभिन्नाभिधानप्रत्ययनिमित्तमेक सामान्यम्, न सर्वमिति चेत् । कथमन्यतोऽन्यत्र प्रत्ययवृत्ति ? तत्सम्बन्धात् [इति चेत्] । तस्याकार्यद्रव्यादिष्वपि प्रसङ्ग । असामान्यात्मकत्वान्नेति चेत् । ननु स एवाय विचार्यते कोऽस्य सामान्यात्मेति ? तत्र सति सम्बन्धे प्रत्ययवृत्ति । सत्ता सामान्यमिति । अत्रोच्यते । अनेकसम्बन्धेभ्य कार्यद्रव्यादिभ्यो निमित्तसम्भवात् प्रत्ययवृत्ति । ततश्च सामान्यात्मता । अन्यथाऽन्यत्रापि मा भूद्विशेषाभावात् । तथा च द्रव्यगुणसामान्याना रूपसकर इति ॥

एव तर्हि बुद्धेरेव प्रतिभासो ज्ञानरूपत्वात्सैव सामान्यम् । तन्न । यस्मात्—

ज्ञानाद्व्यतिरिक्त च कथमर्थान्तर व्रजेत् ॥७३॥

ज्ञानस्य रूप कथमर्थाना सामान्यम्, तस्य तेष्वभावात् । तद्भावाध्यवसायात् तथा भ्रान्त्या व्यवहार इति चेत् । तत्र तथाज्ञानोत्पत्ते. किं निबन्धनम् ? अनाश्रयस्य चोत्पत्तौ सर्वत्र स्यात् । अथवा ज्ञानादव्यतिरिक्तमेकस्मात् कथमन्यस्य पुनर्ज्ञानस्य रूप स्याद् व्यक्त्यन्तरभाविन ? ततश्च ज्ञानान्तर व्यक्त्यन्तर वा अव्याप्नुवत् कथ सामान्य स्यात् ?

तस्मान्मिथ्याविकल्पोऽयमर्थेष्वेकात्मताग्रह ।

न ह्यर्था व्यतिरिक्तेनाऽव्यतिरिक्तेन वा केनचिदात्मना समाना । तथैषा ग्रहण मिथ्याविकल्प एव ॥

इतरेतरभेदोऽस्य बीजं संज्ञा यदर्थिका ॥७४॥

*यस्य प्रत्यायनार्थं संकेतः क्रियते—अभिमतसाध्यात् भावान्तरतसाध्येभ्यो भेदेन ज्ञात्वा* तत्परिहारेण प्रवर्तेतेति । सोऽयमितरेतरभेदस्तस्यैवं त्वप्रतिभासिनो मिथ्याविकल्पस्य बीजम् । तमेव गृह्णन्नेव विकल्पः स्ववासनाप्रकृतेरेवं प्रतिभाति ॥

कथं पुनर्भिन्नानामभिन्नं कार्यम्, येन तदन्येभ्यो भेदा[द]भेद इत्युच्यते ? प्रकृतिरेषा भावानां यद्—

एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने ।
भेदेऽपि नियताः केचित् स्वभावेनेन्द्रियादिवत् ॥७५॥

यथेन्द्रियविषयालोकमनस्काराः, आत्मेन्द्रियमनोर्थसन्निकर्षा वा असत्यपि तद्भावनिमित्ते सामान्ये रूपविज्ञानमेकं जनयन्ति । एवं शिंशपादयोऽपि भेदाः परस्पराऽसत्त्वयेऽपि प्रकृत्यै- वैकमेकाकारं प्रत्यभिज्ञानं जनयन्ति, अन्या वा यथाप्रत्य[10b]यं दहनगृहादिकां काष्ठसाध्या मर्थक्रियाम् । न तु भेदाविशेषेऽपि जलादयः, श्रोत्रादिवद्रूपादिज्ञाने ॥

ज्वरादिशमने कांश्चित् सह प्रत्येकमेव वा ।
दृष्टा यथा वौषधयो नानात्वेऽपि न चापराः ॥७६॥

यथा गुडूचीप्रभृतयः[१] सह प्रत्येकं वा ज्वरादिशमनलक्षणमेकं कार्यं कुर्वन्ति । न तत्र सामान्यमपेक्षन्ते भेदेऽपि, तत्प्रकृतित्वात् । न तदविशेषेऽपि दधित्रपुसादयः ॥

स्यादेतत्—सामान्यमेव किंचित्तासु तथाभूतासु विद्यते । तत एव तदेकं कार्यमिति । तदयुक्तम् ।

अविशेषात्

सामान्यस्य ।

न सामान्य

तत्कार्यकृत् । तस्यापि

अविशेषप्रसङ्गात् (मतः) ।

तासां क्षेत्रादिभेदेऽपि

यदि हि सामान्यात् ज्वरादिशमनं कार्यं स्यात्, तस्मादि(तस्यावि)शेषाद्व्यक्तीनां धात्रादिभेदेपि चिरशीघ्रशमनादयो विकल्पा गुणतारतम्यं च न स्यात् । विशेषे वा सामान्यस्य स्वभावभेदात् स्वरूपहानम् ।

---

[१] गुडूचीमुस्तादयः—म०

ध्रौव्याच्च

सामान्यस्य ।

अनुपकाराः ॥७७॥

यदि ह्युपकुर्यादनाधेयविशेषस्याऽनन्यापेक्षणात्[1] सकृत् सर्वं स्वकार्यं जनयेत् । न वा तज्जननस्वभावम् । व्यक्तयस्तु कालदेशसहकारवशेन विशिष्टोत्पत्तयो विशेषवत् कार्यं कुर्युरित्यविरोधः । तद्वदर्थोऽपि(र्था पि) केचित् स्वभावभेदेऽप्येकप्रत्यभिज्ञानादिकार्यक्रिया कुर्वन्तस्तदकारिभ्यो भेदादभिन्ना उच्यन्ते । एकेन वाऽनेको जनितोऽतज्जन्येभ्यो भेदात् ।

किं पुनरनेन भेदलक्षणेन सामान्येन स्वलक्षणं समानमिति प्रत्येयम् अथान्यदेव ? किं चातः ? यदि स्वलक्षणं कथं विकल्पस्य विषयः ? अन्यतो वा कथमर्थक्रिया ? स्वलक्षणे चानित्यत्वाद्यप्रतीतेरताद्रूप्यम् । तेषां चावस्तुधर्मता ।

नैष दोषः, ज्ञानप्रतिभासिन्यर्थे सामान्यसामानाधिकरण्यधर्मधर्मिव्यवहारात् । यदेतत् ज्ञानं वस्तुस्वभावग्राहिणानुभवेनाहितां वासनामाश्रित्य विकल्पकमुत्पद्यते, अतद्विषयमपि तद्विषयमिव, तदनुभवाहितवासनाप्रभवप्रकृतेरध्यवसिततद्भावस्वरूपम्, अभिन्नकार्यपदार्थप्रसूते अभिन्नाकारार्थग्राहीव तदन्यभेदपरमार्थसमानाकारम् ।

तत्र योऽयमाकारः प्रतिभाति बाह्यश्च एक इवानर्थक्रियाकार्यपि तत्करीव, व्यवहारिणां तथाध्यवसायप्रवृत्तेः, अन्यथा प्रवृत्त्ययोगात् । तदर्थक्रियाकारितया प्रतिभासनात् तदकारिभ्यो भिन्नमिव । न च तत् तत्त्वम्, परीक्षाक्षमत्वादिति प्रतिपादयिष्यामः । तेऽर्था बुद्धिनिवेशिनः । तेन समाना इति गृह्यन्ते, कुतश्चिद्व्यावृत्ता [इति] प्रतिभासनात् । न स्वलक्षणत्वेना(ण तेन, तथा)प्रतिभासनात् ।

त एव कुतश्चिद्व्यावृत्ताः पुनरन्यतोऽपि व्यावृत्तिमन्तोऽभिन्नाश्च प्रतिभान्तीति । स्वयमसतामपि तथा बुद्ध्या उपदर्शनात् मिथ्यार्थ एव सामान्यसामानाधिकरण्यव्यवहारः क्रियते । सर्वेषामेव स्वलक्षणानामेव दर्शनाहितवासनाकृतो विप्लव इति । तत्प्रतिबद्धजन्मना विकल्पानामतत्प्रतिभासित्वेऽपि वस्तुन्यविसंवादो मणिप्रभायामिव मणिभ्रान्तेः । नान्येषां तदुद्भवप्रभवे सत्यपि यथादृष्टविषयानुसरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपात् । दीपप्रभायामिव मणिबुद्धेः ।

तेन न विकल्पविषयेष्वर्थेष्वर्थक्रियाकारित्वम् । नापि स्वलक्षणस्यानित्यत्वाद्यभावः । यस्मान्नानित्यत्वं नाम किञ्चिदन्यच्चलाद्वस्तुनः । क्षणप्रत्युपस्थानधर्मतया तस्य हि तथाभूतस्य ग्रहणादेतदेव भवति—'अनित्योऽयम्' 'अनित्यत्वमस्य' इति च । तद्धर्मतामेवावतरन्तो विकल्पा नानैकधर्मव्यतिरेकान् सन्दर्शयन्ति । न च ते निराश्रयास्तद्भेददर्शनाश्रयत्वात् । नावस्तुधर्मता, तत्स्वभावस्यैव तथाख्यातेः । वस्तुनस्तु नानैकव्यतिरेकग्रहो विभ्रमः स्यात् । तस्यैकानेक-

---

[1] ०स्यान्यानपे० क०

कार्यकारिणस्तज्जिज्ञासासु तथाभावख्यापनाय तथाश्रुतस्थितित्वान्न वस्तुभेदात् । तस्यैवस्यानेकत्वायोगात् । अनेकस्य चैकत्वायोगाद् व्यतिरिक्तस्य च निषेधात् । तेषा प्रकृतिभेदात् यथा[11a]वस्तुशब्दार्थाभ्युपगमे सामानाधिकरण्यायोगात् ।

तदुपाधेरेवस्याभिधानाददोष इति चेद् । अनुपकारिणि पारतन्त्र्यायोगाद् अनुपाधि । पारतन्त्र्ये[1] च जन्यजनकभावात् सहानवस्थितेर्द्वयोरनभिधानम् । एकस्य बुद्धयाध्याहारे न वस्तुविषयः [2]शब्द.(ब्द.) स्यात् । बुद्धिप्रतिभाति(स)विषयत्वे च सर्वं तथैवास्तु । तथा भिन्नोपाधिमत एकग्रहणेऽप्रतिभासनात् ।

उपकार्योपकारिणोरप्युपाधितद्वतो सहावस्थानाददोष इति चेत् । न । निष्पन्नस्य पारतन्त्र्याभावादनुपाधित्वम्, नानिष्पन्नस्य, स्वरूपासिद्धे । सर्वथाऽसत् पारतन्त्र्यमिति कल्पनारोपितं कृत्वा व्यवहारे सर्वथा[3] सैव किं न बुद्धिरनुविधीयते । एकशब्दप्रमाणेन विषयीकरणे वस्तुबलाव(द)दोषारक्षे(पक्षे)पात्तदन्यवैयर्थ्यं च न स्यात् । बुद्धिप्रतिभासस्य निर्वस्तुकत्वात् वस्तुसामर्थ्यभाविनामप्रसङ्ग ।

तदभिन्नमेकाकारविषयीकरणेऽप्यनिश्चितान्याकारगाकारान्तरसाकाङ्क्षबुद्धिग्राह्यं भिन्नशब्दार्थोपसंहारेऽप्यभिन्न बुद्धौ प्रतिभातीति सामान्यविशेषणविशेष्यभावसामानाधिकरण्यानि यथाप्रतीति न विरुध्यन्ते । धर्मधर्मिभेदोऽप्यस्यानेकार्थभेदसमये तदेकार्थभेदविधिप्रतिषेधजिज्ञासाया तदेव वस्तु प्रतिक्षिप्तभेदान्तरेण धर्मशब्देन [4]सचोद्य बुद्धेस्तथाप्रतिभासनात् व्यतिरिक्त धर्ममिवाऽविशेषेणापरमस्य स्वभाव धर्मितया व्यवस्थाप्य प्रदर्श्यते । तावता चारोत धर्मधर्मिणोर्भेदात् भेदवती बुद्धि प्रतिभाति । न वस्तुभेदाद्यथोक्तदोषात्तथाभूतभेदबाहुल्यचोदनया वचनभेद साध्यसाधनभेदश्च तत्स्वभावसमाश्रयै धर्मप्रतिभासभेदैस्तत्स्वभावप्रतिपत्तये क्रियत इति ।

तत्स्वभावग्रहाद्या धीस्तदर्थे वाप्यर्थापिका ।
विकल्पिकाऽतत्कार्यार्थभेदनिष्ठा प्रजायते ॥७८॥

तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यत. ।
व्यावृत्तमिव निस्तत्त्व परीक्षानङ्गभावतः ॥७९॥

अर्था ज्ञाननिविष्टास्ते यथा व्यावृत्तिरूपिण. ।
तेनाभिन्न इवाभान्ति व्यावृत्ताः पुनरन्यतः ॥८०॥

स एव तेषां सामान्यसमानाधारगोचरैः ।
ज्ञानाभिधानैर्मिथ्यार्थो व्यवहारः प्रतन्यते ॥८१॥

स च सर्वं पदार्थानामन्योन्याभावसंश्रय ।
तेनान्यापोहविषयो वस्तुलाभस्य संश्रयः ॥८२॥

---

[1] न्योपि जन्य०—क०
[2] शब्दार्थ —क०
[3] सर्वत्र—क०
[4] सचोद्य—क०

यत्रास्ति वस्तुसबन्धो यथोक्तानुमितौ यथा ।
नान्यत्र भ्रान्तिसाम्येऽपि दीपतेजो मणौ यथा ॥८३॥

तथैककार्योऽनेकोऽपि सदकार्यान्यताश्रयं ।
एकत्वेनाभिधानानं व्यवहार प्रतायते ॥८४॥

तथाऽनेकक्रुदेकोऽपि तद्भावपरिदीपने ।
अतत्कार्यादिभेदेन नानाधर्मा प्रतीयते ॥८५॥

यथाप्रतीतिकथित शब्दार्थोऽसावसन्नपि ।
सामानाधिकरण्य च वस्तुन्यस्य न सभव ॥८६॥

धर्मिधर्मव्यवस्थानं भेदोऽभेदश्च यादृश ।
असमीक्षिततत्त्वार्थो यथालोके प्रतीयते ॥८७॥

स तथैव समाश्रित्य साध्यसाधनसस्थिति ।
परमार्थावताराय विद्वद्भिरवकल्प्यते ॥८८॥

ससृज्यन्ते न भिद्यन्ते स्वतोऽर्था पारमार्थिका ।
रूपमेकमनेक च तेषु बुद्धेरुपप्लव ॥८९॥

भेदस्ततोऽय बौद्धेऽर्थे सामान्य भेद इत्यपि ।
तस्यैव चान्यव्यावृत्त्या धर्मभेद प्रकल्प्यते ॥९०॥

साध्यसाधनसकल्पे वस्तुदर्शनहानित ।
भेद सामान्यसंसृष्टो ग्राह्यो नात्र स्वलक्षणम् ॥९१॥

समानभिन्नाकारेण तद ग्राह्य कथचन ।
भेदाना बहुभेदाना तत्रैकस्मिन्नयोगत ॥९२॥

तद्रूप सर्वतो भिन्न तथा तत्प्रतिपादिका ।
न श्रुति कल्पना [1]वास्ति सामान्येनैव वृत्तित ॥९३॥

इति सग्रहश्लोका ।

किं पुन कारण स्वलक्षणे शब्दा न प्र[11b]युज्यन्ते ? यस्मात्—

शब्दा सकेतित प्राहुर्व्यवहाराय स स्मृत ।
तदा स्वलक्षण नास्ति सकेतस्तेन तत्र न ॥९४॥

न हि शब्दा असकेतितमर्थं प्रकाशयन्ति । सकेतश्च व्यवहारार्थं क्रियतेऽपि नामेत शब्दात् कृतसकेतादुत्तरकालमिममर्थं प्रतिपद्यतेति । न च प्राक्कृतसकेतस्यैकत्र स्वलक्षणे शब्दस्य पश्चात् प्रयोगो युक्त, तस्य देशकालव्यक्तिभेदाऽनास्कन्दनात् । तस्मान्न स्वलक्षणे समय ॥

[1] नास्ति—क०

सामान्य तर्हि व्यतिरिक्तमव्यतिरिक्त वाच्यापि(क्त व्यापि) शब्दैरभिधीयते । तत्र व्यवहारफलाभावा(व)दोषः । नैतदस्ति । यस्माद्—

अपि प्रवर्त्तेत पुमान् विज्ञायार्थक्रियाक्षमान् ।
तत्साधनायेत्यर्थेषु सयोज्यन्तेऽभिधायकाः ॥९५॥

न खलु वै व्यसनमेवैतल्लोकस्य यदयमसत्येतयथप्रयुञ्जानो वा शब्दान् दु खमासीत् । किं तर्हि ? सर्व एवास्यायमेय आरम्भ फलार्थ, निष्फलारम्भस्योपेक्षणीयत्वात् ॥

तदय क्वचिन्नियुञ्जान. किञ्चित्फलमेवोद्दिश्य युक्त । तच्च सर्वमिष्टानिष्टप्राप्ति-परिहारलक्षणम् । तेनायमिष्टानिष्टसाधनासाधन ज्ञात्वा तत्र प्रवृत्ति निवृत्ति च कुर्यां कारयेय वेति शब्दान् नियुञ्जीत नीयोगे वाद्रियेत, अन्यथोपेक्षणीयत्वात् ॥

तत्रानर्थक्रियायोग्या जातिः

न हि जाति क्वचिद्वाहादावुपतिष्ठते । न [१]च तादृश प्रकरणमन्तरेण लोके शब्द-प्रयोगो व्यवहारेषु ।

व्यक्तेरशक्यचोदनत्वात् लक्षितलक्षणार्थं जातिचोदनेति चेद् । असम्बन्धचोदिते सत्यपि सबन्धे कथ प्रवर्त्तेत ? न हि कश्चिद्दण्ड छिन्धीत्युक्ते दण्डिन छिनत्ति । नाप्यसभवाद्व्यक्तौ प्रवृत्ति । एव ह्यसबद्धप्रलापी स्यात् । न ततोऽन्यत्र प्रवृत्तिर्बलीवर्ददोहचोदनावत् ।

न चार्थान्तरचोदनेनार्थान्तरस्य लक्षणम् । न हि सबन्धे सत्यपि दण्डशब्दाद्दण्डिनि प्रतिपत्ति । अनियतसम्बन्धत्वात्तत्र नेति चेत् । तत्तुल्य जातावपि, व्यक्तीनामपाये केवलाया जातेरवस्थानात् । आम्रादिशब्दास्तु सबन्धिशब्दत्वादादिष्टेषु परम् । न तथा गोत्वादि-श्रुतय सबन्धिवाचिन्य, अपेतव्यक्तीनामपि जातीना तच्छ्रुतिभ्यो नित्यमनुगमनप्रसङ्गात् । सर्वदा तत्सबन्धयोग्यताप्रतीतेरिष्टमेवेति चेत् । सर्वदा तर्हि गोशब्दादप्रवृत्ति, सहिता-सहितावस्थयोर्विशेषेणानाक्षेपात् । व्यक्तिसबन्धिन्या जातेश्चोदनाददोष इति चेत् । सापि तर्हि तद्विशेषणत्वेनावस्थिता व्यक्तिराक्षिप्तैवेति तद्वानभिधेय स्यात् ।

न च जातिव्यक्त्योः कश्चित् सम्बन्धोऽन्योन्यमजन्यजनकत्वेनानुपकारात् । ततो लक्षणमप्ययुक्तम् । तस्मान्न जातिशब्दनिवेशनम्, फलाभावात् ॥

एव तर्हि

तद्वानस्तु

अर्थक्रियास्विति तत्र शब्दो नियोक्ष्यते ।

स च ।

---

[१] वा—क०

साक्षान्न योज्यते कस्मात्

यदि व्यक्तौ शब्दनिवेशनं फलवत् । स च शब्दः कस्मान्न साक्षाद्व्यक्तिष्वेव नियुज्यते । किं तत्रान्येन व्यवधिना ?

आनन्त्याच्चेदिदं समम् ॥९६॥

स्यादेतत्—आनन्त्याद्व्यक्तीनामशक्यः शब्देन सम्बन्धः कर्तुम् । एवं सतीदमानन्त्यं तद्वत्स्वपि समानम् । जात्यापि हि विशिष्टा व्यक्तय एव वक्तव्या इत्यकृतसम्बन्धस्यानभिधानादवश्यं ताभिः सम्बन्धः करणीयः । स च न शक्यते । तत्सम्बन्धिनि करणात्तत्रापि कृत एवेति चेत् । उक्तमत्र—कृतादन्यत्राऽप्रतीतिः । न च सम्बन्धोऽस्तीति ॥

अपि च

तत्कारिणामतत्कारिभेदसाम्ये न किं श्रुतिः ।

यामर्थक्रियामधिकृत्यायमर्थं शब्दाभियुङ्क्ते तत्कारिणामर्थानामन्येभ्यो भेदात् तत्रैव चैषामभेदे किं न शब्दः प्रयुज्यते ।

तद्दोषस्य साम्याच्चेदस्तु जातिरलं परा ॥९७॥

स्यादेतत्—अन्यव्यावृत्तेऽपि शब्दार्थे व्यावृत्तिविशिष्टस्य तद्वतोऽभिधानात् न तद्वत्पक्षाद्विशेषः । को ह्यत्र विशेषो व्यावृत्तिर्जातिर्व्यावृत्तिमान् जातिमानिति । अस्तु नाम तद्दोषो जातिरन्या मा भूत् । जातिमपि ह्यभ्युपगच्छताऽस्य भावानां भेदोऽभ्युपगन्तव्यः । तदभावे [12a]तस्या अप्यभावप्रसङ्गात् । स चैकस्माद्भेदस्तदन्येषामभेदस्तद्विशिष्टेष्वर्थेषु प्रतिपत्तिरस्तु । सर्वथा दोषपरिहारस्य कर्तुमशक्यत्वात् । अर्थान्तराभ्युपगमे प्रयोजनाभावात् । तदर्थस्यान्येन साधनात् । तदभ्युपगमस्य चावश्यभावित्वात् ॥

अपि च

तदन्यपरिहारेण प्रवर्तेतेति च ध्वनिः ।
उच्यते तेन तेभ्योऽस्याऽव्यवच्छेदे कथं च ॥ ॥९८॥

शब्दो ह्येष प्रयुञ्जानोऽर्थेष्वनिष्टपरिहारेण प्रवर्तेतेति प्रयुङ्क्ते । तत्रान्यत्र च प्रवृत्त्यनुज्ञायां तन्नामग्रहणवैयर्थ्यात् । प्रवृत्तिनिवृत्त्यनुज्ञायां चैकचोदनाऽनादरादवचनमेव स्याद् अन्यव्यावृत्त्याऽनभिधाने । तस्मादवश्यं शब्देनान्यव्यवच्छेदश्चोदनीयः । स चाभिन्नस्तदन्येष्विति जातिधर्मोऽप्यस्ति । तन्नियताभ्युपगमे नियतचोदने जात्यर्थप्रसाधनं च परित्यज्यार्थान्तरकल्पनमनर्थनिर्बन्ध एव । यथाकल्पनमस्याऽयोगात् । न वै व्यवच्छेदो न क्रियते । प्रवृत्तिविषय तु कथञ्चिद्भूर्जातिरुक्ता ॥

व्यवच्छेदोऽस्ति चेदस्य नन्वेतावत् प्रयोजनम् ।
शब्दानामिति किं तत्र सामान्येनापरेण वः ॥९९॥

ननूक्तं प्रवृत्तिविषयं प्रदर्श्यते इति । उक्तमिदमयुक्तं तूक्तम् । तथा हि न सा प्रवृत्तियोग्येति निवेदितमेतत् । तद्द्वारेणाचोदितेऽप्रवृत्तिरप्युक्ता । तद्वच्चोदनेऽपि व्यवधानम् । जातितद्वतो प्रवृत्तिविषयत्वे व्यावृत्तितद्वतो किं नेष्येते ? व्यावृत्तेरवस्तुत्वेनाऽसाधनत्वा च्चेत् । तत्तुल्यं जाते । तद्वत साधनाददोष इति चेत् । तुल्यं तद्व्यावृत्तिमत ।

अवस्तुग्राही च व्यावृत्तिवादिना शाब्दः प्रत्ययः । स विभ्रमवशादकारकेऽपि कारका-ध्यवसायी प्रवर्त्तयति । वस्तुवादस्तु वस्तूत्पत्त्या तत्प्रतिबन्धे सति भवत्यन्यथा नैवास्ति । वस्तूत्पत्तेरभ्रान्तिरिति चेत् । न । अतत्प्रतिभासिनस्तदध्यवसायात् । मणिप्रभायां मणिभ्रान्ति-दर्शनेन व्यभिचारात् । भ्रान्तेरवस्तुसंवाद इति चेत । न । यथोक्तेनैव व्यभिचारात् । वितथ प्रतिभासो हि भ्रान्तिलक्षणम् । तत्रान्तरीयकतया तु संवादो न प्रतिभासापेक्षी ।

वस्तुनि तु यथाभावमर्पितचेतसः प्रवृत्तौ ग्राह्यस्य सामान्यस्यानर्थक्रियायोग्यत्वाद् अप्रवृत्ति । अन्यत्र च प्रवृत्तावतिप्रसङ्गात् । तद्ग्रहणे च(वा)सामर्थ्यं [1]भेदपर्यायं प्रोक्ता । जातिग्रहणेऽपि सवभ्यान्छिलष्टाकारा बुद्धि प्रवर्त्तयतीति चेत् । तदा न जातिर्न तद्वान एकस्यापि [2]स्वभावा(व)स्थिते[र]ग्रहणादिति परवाद एवाधित स्यात ॥

एवं तर्ह्यन्वयिनः कस्यचिदर्थस्याभावात् प्रकृतिभिन्नेष्वर्थेषु तदेवेदमिति प्रत्यभिज्ञानं न स्यात । नैष दोष । यस्मात्—

ज्ञानाद्यर्थक्रियां तां तां दृष्ट्वा भेदेऽपि कुर्वत ।
अर्थांस्तद्व्यपिलेष्यविषयंध्वनिभिः सह ॥१००॥
संयोज्य प्रत्यभिज्ञानं कुर्यादप्यन्यदर्शने ।

यु(उ)क्तमेतत्—भेदेऽपि भावास्तुल्यार्थक्रियाकारिणः, चक्षुरादिवदिति । तामेवा ज्ञानादिकामर्थक्रियां तेषु पश्यतो वस्तुधर्मतयैवान्यभ्यो भिद्यमाना भावास्तद्व्यावृत्तिविषयध्वनि संसृष्ट 'तदेवेदम्' इति स्वानुभववासनाप्रबोधेन संसृष्टभेद मिथ्याप्रत्ययं जनयन्ति । अन्यथा न भेदसंसर्गवती बुद्धि स्यात्पथा दण्डिषु । न हि तत्रैव दण्डयोगेऽप्यन्यत्र 'स एवायम्' इति । किं तर्हि ? 'तदिह' इति । न चैवं प्रत्यभिज्ञानम् । किं तर्हि ? 'तदेवेदम्' इति । तत्र तदेकमनेकत्र पश्यतोऽपि भेदसंसर्गवद्युक्तम् । विभ्रमबलात् तथा ज्ञाने न विरोध ।

निमित्ताऽभावाद्विभ्रमोऽयुक्त इति चेत् । त एव भावास्तदेकार्थकारिणोऽनुभवद्वारेण प्रकृत्या विभ्रमफलाया विकल्पवासनाया हेतुत्वान्निमित्तम् । मरीचिकादिष्वपि जलादि-भ्रान्तेस्तावेवाभिन्नाकारपरामर्शप्रत्यय[12b]निमित्तानुभवजननी भावो कारणं भिन्नावपि । न हि तत्रान्यदेव किंचित् सामान्यमस्ति यत्तया प्रतीयते । सत्त्वे वा सदर्थग्राहिणी बुद्धिर्भ्रान्तिर्न स्यात् ।

अभूताकारसमारोपाद् भ्रान्तिरिति चेत् । न तर्हि सा तत्सामान्यग्राहिणी । यमेव सत्याकारमियमारोपयति, स एवास्या विषयः, अविषयीकृतस्याऽन्यस्यसमारोपात् । आकारान्त-

---

[1] सामान्यवे० क०   [2] स्वभावस्थित्यग्रहणात्—क०

रवत् । स च तत्र नास्तीत्यसामान्यम् । सति सामान्यग्रहणे तदारोप, नान्यथाऽतिप्रसङ्गादिति चेत् । सत्यैककार्यकारिग्रहण इति किं नेष्यते ? अवश्य चेच्छतापि सामान्य व्यक्तीनामेककार्यजननशक्तिरेष्टव्या । ततस्ता एवान्योन्या( एवान्येभ्यो ) भिद्यमानास्तादृश प्रत्यय जनयन्तीति किमत्र सामान्येन ? यथाभावमेवाऽसंसृष्टभेद किं न प्रत्येति चेत् । अशक्तिरेषा विकल्पानामविद्याप्रभवात् ।

न वै बाह्यापेक्षा एव भ्रान्तयो भवन्ति । किंतु विप्लवादान्तरात् । केशादिविभ्रमवत् । अविद्योद्भवाद्विप्लवत्वे चक्षुर्विज्ञानादिष्वपि प्रसङ्ग । न । तस्या विकल्पलक्षणत्वात् । विकल्प एव ह्यविद्या । सा स्वभावेनैव विपर्यस्यति । [1]न चैवमिन्द्रियज्ञानानि विकल्पकानि । न वा तेष्वप्येष दोषोऽद्वयाना द्वयनिर्भासादिति वक्ष्याम ।

सर्वेषा विप्लवेऽपि प्रमाणतदाभासव्यवस्था आश्रयपरावृत्तेरर्थक्रियायोग्याभिमतसंवादनात् । मिथ्यात्वेऽपि वा प्रमाणानुकूलत्वात् । मातृराज्ञाविवत् । मरीचिकाया जलज्ञानस्यान्यस्य च विभिन्नभावोत्पत्तेर्विभ्रमस्य भावितेऽप्यभिप्रेतार्थक्रियायोग्याऽयोग्योत्पत्ते अर्थसंवादेतरौ ।

अयोग्यात् तत्समुत्पत्तिरिति चेत् । विकल्पानामर्थप्रतिबन्धनियमाभावात् । न हि विकल्पा यथार्थमेव जायन्ते । सति मरीचिकादर्शने जलभ्रान्तिरिति तदुद्भवेत्युच्यते, न यथास्वभावमजलविवेकिनार्थेन स्वभावानुकारप्रत्यर्पणेन जननात् । सा तु विशेषलक्षणाऽपाटवात् प्रत्ययापेक्षिणा स्ववासनाप्रबोधेन जन्यते । तस्माद्भिन्नजन्मनो विकल्पविभ्रमात् 'तदेवेदम्' इति प्रत्यभिज्ञानम् । [न] तद्व्यतिरिक्तस्य सामान्यस्य दर्शनात्, नाऽव्यतिरिक्तस्य, व्यक्तितत्त्वानन्वयात् ॥

अपि च

परस्यापि न सा बुद्धिः सामान्यादेव केवलात् ॥१०१॥

न हि परोक्तेषा बुद्धि केवल सामान्यभाविनी वक्तुमर्हति ॥

नित्यं तन्मात्रविज्ञाने व्यक्त्यज्ञानप्रसङ्गतः ।

यदि हि नित्यमनया बुद्ध्या सामान्यमेव गृह्येताप्रतीतैव व्यक्ति स्याद् अनेन ज्ञानेन ॥

तथा कदाचित् संबद्धस्याऽगृहीतस्य तद्वतः ॥१०२॥

तद्वत्तानिश्चयो न स्याद्व्यवहारस्ततः कथम् ?

यदा सामान्यग्राहिणो विज्ञानस्य न भेद आलम्बनभावेनोपयुज्यते, तदा न तौ कदाचिदपि श्लिष्टौ गृहीताविति 'इदमस्य सामान्यम्, अय वा तद्वान्' इति न स्यात् । तथा च तत्प्रतिपत्त्या तद्वति प्रतिपत्तिर्न स्यादर्थान्तरवत् ॥

---

[1] नैवमिन्द्रि०—क०

एकवस्तुसहायाश्चेद्व्यक्तयो ज्ञानकारणम् ॥१०३॥

स्यादेतत्—भवन्ति व्यक्तयस्तस्याऽऽलम्बनभावेन कारणं न तु केवलाः । यदा पुनरासामेकं सहकार्यस्ति तदा तत्सहिता गृह्यन्त इति ॥

तदेकं वस्तु किं तासां नानात्वं समपोहति ।
नानात्वाच्चैकविज्ञानहेतुता तासु नेष्यते ॥१०४॥

किं चैतया भेदानां तेनैकेन नानात्वं निराक्रियते । नानात्वं हि तेष्वेकज्ञानाकारणत्वे कारणमुच्यते ॥

अनेकमपि यद्येकमपेक्ष्याभिन्नबुद्धिकृत्

न ब्रूमोऽनेकमेकं प्रत्ययं न जनयति भेदादिति । न भेदो जननविरोधी । किं तर्हि ? कैवल्यम् । तेनैकसहिता जनयन्त्येव । एवं तर्हि

ताभिर्विनाऽपि प्रत्येकं क्रियमाणां धियं प्रति ॥१०५॥
तेनैकेनापि सामर्थ्यं तासां नेत्यग्रहो धिया ।

कथमिदानीं व्यक्तीनां तत्र ज्ञाने सामर्थ्यगतिः ? प्रत्येकं तासामभावेऽपि तद्भावा-दसति सामान्येऽभावादितरथा न भावात् । नैष दोषः । यथा नीलादिष्वेकापायेऽपि चक्षुर्विज्ञानं भवतीति न समूहेऽपि तेषामसामर्थ्यम् । तथेहापि प्रत्येकमेकापाये भवतीति न सर्वेषामसामर्थ्यम् ॥

विषम उपन्यासः । तथाहि—

नीलादेर्नेत्रविज्ञाने पृथक् सामर्थ्यदर्शनात् ॥१०६॥
शक्तिसिद्धिः समूहेऽपि नैवं व्यक्तेः कथञ्चन ।

नीलादीनां चक्षुर्विज्ञाने प्रत्येकमपि सामर्थ्यं [13a] दृष्टमिति समूहेऽपि शक्तिरविरुद्धा । तथा न कदाचिद् व्यक्तयः सामान्यनिरपेक्षा अन्वयि विज्ञानं जनयन्ति । तस्मादशक्ता एव व्यक्तयस्तत्रेति न गृह्येरन् ॥

तासामन्यतमापेक्षं तच्चेदुक्तं न केवलम् ॥१०७॥

अथापि स्यान्न वेमरहितः कुविन्दः पटं करोति । प्रत्येकं वेमाभावेऽपि कुविन्दः करोतीति न तत एवोत्पत्तिः । तथा केवलमेकैकव्यक्त्यपाये विज्ञानोत्पत्तावपि सामान्यं सहेतु । तासां व्यक्तीनामेषां काचिदपेक्ष(स्य) विज्ञानमुत्पादयतीति ॥

एवं सति

कथमेकमनुकुर्युस्ता रूपमेकां धियं च न ।

भिन्नाना ह्यर्थानामेकार्थोपक्रिया विरोधिनीति सर्वोऽप्ययमारम्भ । ताश्चेद्व्यक्तयो भिन्ना अप्येक सामान्यमुपकुर्वन्ति, क पुनरासा विज्ञानेनापराध कृतो यत्तन्न कुर्वन्ति ? किं तेनासामन्तर्गडुना सामान्येन ? यथा भिन्नानामप्येकसामान्योपकारशक्तिरेव तदेवैक विज्ञान कुर्वन्तु ॥

किं च

कार्यञ्च तासां प्राप्तोऽसौ जनने यदुपक्रिया ॥१०८॥

न ह्यनतिशयमात्मानमस्य पूर्ववद् बिभ्रत कश्चिदुपकारको नामातिप्रसङ्गात् । अर्थान्तरजननेऽपि तस्य किं तेन ? तस्य तदाश्रयत्वेऽनुपकारिण कोऽयमाश्रयाश्रयिभावोऽतिप्रसङ्गो वा । उपकारेऽपि तत्रैव तत्प्रतिबन्ध इति किमन्यस्तत्करणात्तदुपकारी । तदपेक्षस्याश्रयस्य तदुपयोगेऽनुपकार्यत्वे कथमपेक्षा नाम ? तदुत्पत्तिधर्मा स्वभावप्रतिबन्धादपेक्षते नाम । अनाधेयातिशयात्मा च परं(परान् अ)पेक्षते नेति व्याहतमेतत् । तस्माद्य कश्चित् कस्यचित् क्वचित् प्रतिबन्ध स सर्वो जन्यतायामेवान्तर्भवति[1], परभावोत्पादने तदनुपकारात् । अकिंचित्करस्य चानुपकारात् ।

तस्मादुपकर्त्युपकृतस्य सामान्यस्य विज्ञानजनने व्यक्तमस्य तत्कार्यताऽनुपज्यते । केवलस्य तत्सामर्थ्ये व्यक्तीना क्वचिदप्यत्र सामर्थ्याऽसिद्धेरग्राह्यत्वम् । समर्था व्यक्तय, ज्ञाने प्रतिभासनादिति चेत् । कथमसिद्धोपकाराणा प्रतिभास इति ? स एव सामान्याभ्युपगमे चिन्त्यते । यस्मान्नानुपकारको विषयोऽतिप्रसङ्गात् । नाऽविषयस्य विज्ञाने प्रतिभास । अनुपकारकस्याविषयत्वेऽतीतानागतादीनामविषयत्वमसतामुपकाराऽसामर्थ्यादिति चेत् । भवन्तु नाम तज्ज्ञानानि निर्विषयाणि । निर्विषयत्वेऽपि तदनुकारी प्रतिभास । तद्रूपानुभवाहितवासनोत्पत्तेरात्मभूत एव विज्ञानस्य । भावाभावानुविधानाच्च सामर्थ्यम्, न प्रतिभासनाद् । अप्रतिभासिनोऽपि व्यक्तिव्यतिरेकेण सामान्यस्य भावात् । प्रतिभासिनामपि केशादिविप्लवानामभावाद् ॥

अभिन्नप्रतिभासा धीर्न भिन्नेष्विति चेन्मतम् ।

न ब्रूमोऽनेकमेककार्यकृन्न भवतीति । किं तर्हि ? न भिन्नेषु पदार्थेष्वर्पिततदाकारा बुद्धिरभिन्नप्रतिभासिनी स्यात् । न वै सामान्यग्राहिणीषु स्वलक्षणप्रतिभास । तदभावेऽपि तासा भावात् । आकारान्तरेण च स्वज्ञाने प्रतिभासनात् । अनेकाकारायोगादेकस्यातिप्रसङ्गाच्च । तस्मान्नेय भिन्नार्थग्राहिण्यभिन्ना प्रतिभाति तदुद्भवा । अतत्प्रतिभासिन्यप्यध्यवसायविभ्रमात् व्यवहारयति लोकम् । स तु तस्या प्रतिभासमान आकारो नार्थेष्वस्त्यन्यत्र भेदादभेदिन । स चारूप । तमेवैषा गृह्णती तथा विप्लवत इत्युक्त प्राक् ।

अपि च—वस्तुसामान्यवादिनोऽपि भिन्ना एव व्यक्तय ।

कथं तास्वभिन्नाभासा बुद्धिरिति तुल्य चोद्यम् । न तुल्यम् । तत्राभिन्नस्य सामान्यस्य

---

[1] मेवोद्भवति—क॰

सद्भावात् । ननु तत्र तस्याभासः ततोऽपि न लक्ष्यते । सा हि वर्णसंस्थानप्रतिभासवतीति भाव्यते । न चेदृशं [13b]सामान्यम् । न च ततो व्यतिरिक्तः कश्चिदभिन्न आकारोऽस्ति ।

आकृतिसामान्यवादिनोऽपि विशेषवत्तस्याऽव्यक्तिरेकादर्शनान्तरेऽस्मृतिरिति भेदान्नाभिन्नः प्रतिभासो युज्यते ॥

अथवाऽस्तु

**प्रतिभासो धिया भिन्नः समाना इति तद्ग्रहात् ॥१०९॥**

नैव तास्वभिन्नः प्रतिभासोऽस्ति समाना इति ग्रहणात् । न ह्येकस्मिन् प्रतिभासे समाना इति युक्तम् । किं तर्हि ? तदेवेति । द्वयस्य ग्रहणाददोष इति चेत् । तथापि 'तदिदं' इति स्यान्न समाना इति । तदेव तासां साम्यमिति चेत् । कथमन्योन्यस्य साम्यम् ? तत्सम्बन्धादिति चेत् । न । अप्रतिबद्धस्य सम्बन्धायोगात् अतिप्रसङ्गाच्च ॥

**कथं ता भिन्नधीग्राह्याः समाश्चेत्**

ननु समाना इति ग्रहणादस्त्वभिन्नः प्रतिभासः । न चैतद्दर्शनं भिन्नाभिन्नयोः प्रतिभासनात् समाना इति प्रतीतिः । किं तर्हि ?

**एककार्यता ।**

**सादृश्यम्**

न हि वयमर्थज्ञाने द्वयाकारो पश्यामः । अपश्यन्तश्च कथमर्थद्वयकल्पनेनाऽऽत्मानमेव विप्रलम्भामहे । एककार्यास्तु व्यक्तय कल्पनाविषयतामुपयान्त्यस्तथाऽन्यथा विभ्रमात् मिथ्याभियत इत्यनवद्यमेतत् ।

**ननु धीः कार्यं तासां सा च विभिद्यते ॥११०॥**

प्रतिभावम् । तत्तत्प्रतिभासिनो विज्ञानस्यापि भेदात् कथमेककार्या ?

यद्धि तासां कार्यं तच्च भिद्यते । यदप्युदकाहरणादिकमेकं घटादिकार्यं तदपि प्रतिद्रव्यं भेदाद्भिद्यत एवेति नैकं भेदानां कार्यमस्ति । नैष दोषः । यस्मात्—

**एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।**
**एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥१११॥**

निवेदितमेतद्यथा—न भावानां स्वभावसंसर्गोऽस्तीति । तत्र संसृष्टाकारा बुद्धिर्भ्रान्तिरेव । तां तु भेदिनः पदार्थाः क्रमेण विकल्पहेतवो भवन्तो जनयन्ति । स्वभावत इति च । स त्वेषामभिन्नो भेद इत्युच्यते, ज्ञानादेः कस्यचिदेकस्य करणादतत्कारिस्वभावविवेकः । तदपि प्रतिद्रव्यं भिद्यमानमपि प्रकृत्यैकप्रत्यवमर्शस्याभेदावस्कन्दिनो हेतुर्भवदभिन्नं ख्याति । तथाभूतप्रत्यवमर्शहेतोरभेदावभासिनो ज्ञानादेरर्थस्य हेतुत्वाद्व्यक्तयोऽपि संसृष्टाकारं स्वभावभेदपरमार्थं स्वभावा एकं प्रत्ययं जनयन्तीत्यसकृदुक्तमेतत् ।

तस्मादेककार्यतैव भावानामभेद ॥

सा चातत्कार्यविश्लेष

एव ।

तदन्यस्यानुवर्त्तिन ।

वस्तुन ।

अदृष्टे प्रतिषेधाच्च

न हि दृश्य विभागेनाप्रतिभासमानमस्तीत्युक्तमेतत । सति वा क्वचिदनाश्रित कथ ज्ञानहेतुरिति ? प्रतिषेधस्य च विधानात्तत्कल्पना युक्तेति ।

तस्मात

सकेत

अपि

तद्विद्विषयक ॥११२॥

एव युक्त । योऽयमन्योन्य विवेको भावाना तत्प्रतीतय एव सकेतोऽपि क्रियमाण शोभत ॥

अतत्कारिविवेकेन प्रवृत्त्यर्थतया श्रुति ।

यदि हि न तत्प्रतीत्यर्थं सकेतस्तस्य व्यवहारकालेऽप्यसस्पर्शात्वान्यपरिहारेण प्रवर्त्तेत । न हि तेषा तेभ्यो विवेक शब्देन चोदित इति ॥

सा च श्रुति

अकार्यकृतितत्कारितुल्यरूपावभासिनीं ॥११३॥

धिय वस्तुपृथग्भावमात्रबीजामनर्थिकाम् ।

जनयन्त्यप्यतत्कारिपरिहाराङ्गभावत ॥११४॥

वस्तुभेदाश्रयाच्चार्थे न विसवादिका मता ।

ततोऽन्यापोहविषया तत्कर्त्राश्रितभावत ॥११५॥

एकस्वभावरहितेष्वर्थेषु तमध्याहारो(ध्यारो)प्योत्पद्यमाना मिथ्याप्रतिभासत्वादकार्यकारिणमपि कार्यकारिणमिवाध्यवस्यन्ती वस्तुपृथग्भावमात्रबीजा समानाध्यवसाया मिथ्याबुद्धि श्रुतिर्जनयन्त्यपि । तदन्यपरिहाराङ्गभावात । परमार्थतस्तद्व्यतिरेकिषु पदार्थेषु न विसवादिनी त्युच्यते । तथा हि स तेषु व्यतिरेको भूत सर्वथाऽव्यतिक्रमणीयत्वात् । नैको व्यतिरिक्तोऽव्यतिरिक्तो वा, सर्वथाऽयोगात् । तस्य समावेशन वस्तुनि दूरोत्सृष्टमेव वस्तु स्यात्, शब्द-

ज्ञानाभ्यां तद्विषयाभिमतस्य तस्याभा[14a]वात् । अन्यस्य च वस्तुधर्मस्य कस्यचिदसंस्पर्शात् । तत एव च सा श्रुतिरन्यापोहविषयेत्युच्यते अन्यव्यावृत्तेष्वर्थेषु व्यावृत्तिभेदमुपादायाऽविशेषेण निवेशनात् । व्यवहारेऽप्यन्यपरिहारेण प्रवर्तनात् ॥

अवृक्षव्यतिरेकेण वृक्षार्थग्रहणे द्वयम् ।
अन्योन्याश्रयमित्येकग्रहाभावे द्वयाग्रहः ॥११६॥
संकेतासंभवस्तस्मादिति केचित् प्रचक्षते ।

यद्यवृक्षेभ्यो भेदो वृक्षस्तस्यावृक्षग्रहणमन्तरेण तथा ग्रहीतुमशक्यत्वात्, अविज्ञातवृक्षेणावृक्षस्यापि तद्व्यवच्छेदरूपस्यापरिज्ञानात् बुद्धावनारूढेऽर्थे [न] संकेतः शक्यत इत्येके ।

तेषामवृक्षाः संकेते व्यवच्छिन्ना न वा

ये एवमेकं वस्तु सामान्यमभ्युपगम्येतरेतराश्रयमन्यव्यवच्छेदेन संकेते चोदयन्ति, तेषां तत्रापि संकेतकरणेऽवृक्षा व्यवच्छिन्ना न वा ?

यदि ॥११७॥

व्यवच्छिन्नाः कथं ज्ञाताः प्राक् वृक्षग्रहणादृते ।

न हि तदा प्रतिपत्ता वृक्षं वेत्ति, नावृक्षम् । तज्ज्ञानार्थमेव तदर्थितयोपगमात् । सोऽजानानः कथमवृक्षव्यवच्छेदं प्रतिपद्येत संकेते । [अ]प्रतिपत्तौ चापरिहृततदन्यनिवेशिनः शब्दात्—

अनिराकरणे तेषां संकेते व्यवहारिणाम् ॥११८॥

न स्यात्तत्परिहारेण प्रवृत्तिर्वृक्षभेदवत् ।

न हि संकेते परान्यवच्छेदेन निवेशिताच्छब्दात् व्यवहारे तत्परिहारेण वृत्तिर्युक्ता शिंशपादिभेदवत् ॥

अथापि स्यात्—

अविधाय निषिध्यान्यत् प्रदर्श्यैकं पुरः स्थितम् ॥११९॥
वृक्षोऽयमिति संकेतः क्रियते[1] तत्प्रपद्यते ।
व्यवहारेऽपि तेनायमदोष इति चेत्

न वै वस्तुसामान्यवादिना कस्यचिद् व्यवच्छेदेन किञ्चिद्विधीयते । किं तर्हि ? एकमग्रतो व्यवस्थितं वस्तु संदर्श्य वृक्षोऽयमिति संकेतः क्रियते । संकेतकाले तथा दृष्टमेवायमर्थं सत् संबन्धिनं च व्यवहारेऽपि प्रतिपद्यत इत्यसमानः प्रसङ्गः ॥

[1] कृत —क०

नाऽसमानो यस्मात्तत्रापि

तद: ॥१२०॥

अयमप्ययमेवेति प्रसङ्गो न निवर्त्तते ।

एकं प्रदर्श्य 'अयं वृक्षः' इति ब्रुवाणोऽयमप्ययमेवेत्युभयी गतिं नातिवर्त्तते । तयोश्च स एव दोषः ।

न दोषो दृष्टविपरीतस्य सुज्ञानत्वात् । एकं हि कश्चित् पश्यतोऽन्यत्र तदाकार-विवेकिनी बुद्धिमनुभवत ततोऽन्यदिति यथाऽनुभवं तद्विवेचनो वैधर्म्यनिश्चय उत्पद्यते । स ह्ययमेव वृक्ष इति प्रदर्श्य व्युत्पादितो यत्रैतत् पश्यति तमेवावृक्षं स्वयमेव प्रतिपद्यते । नैव व्यवच्छेदवाचिनः सम्भवति, एकत्र दृष्टस्य रूपस्य क्वचिदनन्वयात् । दर्शनेन प्रतिपत्तौ व्यक्त्यन्तरेऽपि न स्यात्तथा प्रतीतिः ॥

एवं तर्हि तत्रापि तुल्यमेव तत् । यस्मात्—

एकप्रत्यवमर्शाख्ये ज्ञाने एकत्र हि स्थितः ॥१२१॥
प्रतिपत्ता तदतद्धेतूनर्थान् विभजते स्वयम् ।

निवेदितमेतत् प्राग् यथैते भावा प्रकृतिभेदिनोऽपि विज्ञानादिकमेकं कार्यं केचित् कुर्वन्ति नान्य इति । तानयं तत्र स्वयमेव तद्धेतूनतद्धेतूंश्च विभज्य प्रत्येति ॥

तस्य—

तद्बुद्धिवर्त्तिनो भावान् [1]भावो हेतुतया धियः ॥१२२॥
अहेतुरूपविकलानेकरूपानिव स्वयम् ।
भेदेन प्रतिपद्येतेत्युक्तिर्भेदे नियुज्यते । १२३॥

न तस्या [2]प्रतो(ति)पत्ते यो. भ्रान्त्यैक वस्त्विवेदनात् ।

तेषां प्रकृत्यैव प्रत्ययवशात्तथाभूतविकल्पकारणानामन्वयात्तद्रूपद्बुद्धौ विपरिवर्त्तमाना-स्तज्ज्ञानहेतुतया तदन्यव्यावृत्त्या वाऽतथाभूतानपि तथाध्यवसितानविभक्तबाह्याध्यात्मिकभेदान् प्रतिपत्ता प्रतिपत्तिमनुसृत्य 'एते वृक्षाः' इति स्वपरविकल्पेष्वेकप्रतिभासानादर्श(र्श्य) विकल्प-विज्ञाने व्यवस्थितस्तद्विज्ञानहेतून(तून्)भेदेन प्रतिपद्येतेत्युक्तिरतद्धेतुभ्यो भेदे नि[14b]युङ्क्ते । न तस्या प्रतिपद्यमाना बुद्धिर्विकल्पिका भ्रान्तिवशादेवैकवस्तुग्राहिणीव प्रतिभाति । न पुनरेकं वस्तु तत्र दृश्यमस्ति । यस्य दर्शनादर्शनाभ्यां भिन्नदर्शनेष्वेव वृक्षावृक्ष[वि]भागं कुर्वीत । तस्य शाखादिप्रतिभासविभागेन दण्डवद्भिन्नग्रहणात् । अगृहीतस्य चापरप्रविभागेनानुप-लक्षणात् ।

[1] भात—क० म०        [2] प्रतिपत्ती—क० म०

आगन्तरप्येवं दृष्टाया अन्यत्र द्रष्टुमशक्यत्वात् तदनङ्गतोर्वृत्तावृत्तत्वे व्यतिरेकैव वृथा स्यात् ॥

भवतु नाम घटादिशब्देष्वर्थान्तरव्यवच्छेदः । अथ ज्ञेयादिपदेषु कथम् ? न ह्यज्ञेयं किञ्चिदस्ति यतो भेदः स्यात् । ततो भेदेन विपर्ययीकरण एव तस्य ज्ञेयत्वात् । नैष दोषः यस्मात् —

क्वचिन्निवेशनायार्थे विनिवर्त्य कुतश्चन ॥१२४॥
बुद्धेः प्रयुज्यते शब्दस्तदर्थस्यावधारणात् ।
व्यर्थोऽन्यथा प्रयोगः स्यात् तज्ज्ञेयादिपदेष्वपि ॥१२५॥
व्यवहारोपनीतेषु व्यवच्छेद्योऽस्ति[1] कश्चन ।

शब्दं हि प्रयुञ्जानः सर्वो व्यवच्छेदं नातिवर्त्तते । तस्य प्रवृत्तिनिवृत्त्यर्थत्वात् । यदि ह्ययं न कस्यचित् कुतश्चिन्निवर्त्तयेत् प्रवर्त्तयेद्वा बुद्धिं यथाभूतानुज्ञानात् सर्वव्यवहारेषु न किञ्चिद्व्याहरेद्व्याहारस्यावधारणनान्तरीयकत्वात् । यथा 'घटेनोदकमानय' इति । यदि घटेनाञ्जलिना वोदकानयनं यथाकथञ्चिदभिमतं स्यात् 'उदकमानय' इत्येव वक्तव्यं स्यात् । न घटेनेति । तथा पाणिना वान्येन वा येन केनचिदानीतेनार्थे 'आनय' इत्येव स्यादनाक्षिप्तकरणकर्मकम् । एवमानयनमन्यद्वा किञ्चिदनुष्ठानमननुष्ठानं वाभिमतं तदा 'आनय' इत्यपि न ब्रूयात् । व्यर्थत्वाद्वचनस्य । तथा व्यवहारोपनीतानां ज्ञेयादिशब्दानामपि केनचिद्व्यवच्छेदेन भवितव्यम्, अनन्यथाशङ्कायां प्रयोगायोगात् । यत्र हि यदेव मूढमतेराशङ्कास्थानं तदेव निवर्त्यम् । अनाशङ्कमानो वा किं परस्मादुपदेशमपेक्षेत । अथोत्पन्नसंस्कारं च ब्रुवाणः कथमनुन्मत्तः स्यात् ? तत्संस्कारार्थैव शब्दानां कृतसङ्केतत्वात् । अव्यवहारोपनीतस्य नैव कश्चित् ज्ञेयादिशब्दोऽस्ति । वाक्यगतस्य पदस्यार्थचिन्तनात् ।

क्व पुनरेते शब्दाः प्रयुज्यन्त इति प्रयोगविषयचिन्तायामयमपोह उच्यते । अनिर्दिष्टप्रयोगे तु ज्ञेयशब्दस्य कोऽर्थ इति प्रश्ने न कश्चिदर्थः । तन्न सर्वथाप्रतिपत्तेः । तथा घटादिशब्दानामपि । यापि क्वचित् प्रकरणे केवलशब्दश्रवणात् प्रतिपत्तिर्वृद्धप्रयोगविषयानुसारेण साकाङ्क्षत्वादपरिसमाप्ततदर्था विप्लव एव घटादिशब्दे । तादृशो ज्ञेयादिशब्देष्वपि यथादर्शनमस्त्येव ।

तस्मात् सर्व एव शब्दप्रयोगः कुतश्चिद् बुद्धिं विनिवर्त्य क्वचिन्निवेशनार्थस्तत्साफल्यात् ॥

निवेशनं च यो यस्माद्भिद्यते विनिवर्त्य तम् ॥१२६॥
तद्भेदे भिद्यमानानां समानाकारभासिनि ।
स चायमन्यव्यावृत्त्या गम्यते तस्य वस्तुनः ॥१२७॥
कश्चिद्भाग इति प्रोक्तो रूपं नास्यापि किञ्चन ।
तदगतावेव शब्देभ्यो गम्यतेऽन्यनिवर्त्तनम् ॥१२८॥

---

[1] च्छेदोस्ति—फ०

न तत्र गम्यते कश्चिद्विशिष्टः केनचित् परः ।
न चापि शब्दो द्वयकृदन्योन्याभाव इत्यसौ ॥१२९॥
अरूपो रूपवत्त्वेन दर्शनं बुद्धिविप्लवः ।

निवेश(श्य)मानोऽप्येष शब्दो यो यस्माद्भिद्यते स विनिवर्त्य भिद्यमानानां भेदे समानरूपप्रतिभासिनि आक्षिप्ततदन्यव्यावृत्तिर्निवेश्यते । स एव चायम्—'अर्थान्तरव्यावृत्त्या तस्य वस्तुनः कश्चिद्भागो गम्यते । शब्दोऽर्थान्तरनिवृत्तिविशिष्टानेव भावानाह' इत्यादिना निर्दिष्टः । स हि स भेदः कथमर्थान्तरव्यवच्छेदमाक्षिपन्नेव वर्तते । एकगतभेदस्य चोदनायास्तदन्यव्यावृत्त्याक्षेपनान्तरीयकत्वात् । स एव भेदस्तद्व्यावृत्त्या गतो भागस्तद्गतेस्तदुपाधित्वात्तद्विशिष्टो गत इत्युच्यते । न पुनरर्थान्तरनिवृत्तिविशेषणभूता केषाञ्चिदर्थानां [15a] यया विशिष्टाः शब्दैश्चोद्यन्ते । दण्डवत् । द्वयोर्हि भिद्यमानयोर्भेदस्योभयगतत्वात् । एकगतभेदाभिधानेऽपि नान्तरीयकस्तदन्याक्षेपो भवतीति न तयोर्विशेषणविशेष्यभावः । एकभेदाभिधानेऽप्यन्यव्यावृत्तिगतेरन्वयव्यतिरेकचोदनया व्यवहाराङ्गतां शब्दानां दर्शयन्—"तद्व्यावृत्त्या गम्यते । तद्विशिष्टो वा" इत्याह । अत एव न शब्दस्य द्वौ व्यापारौ—तदन्यव्यावर्तनं स्वार्थाभिधानं च । स्वार्थाभिधानस्य तदन्यव्यावृत्तिगतेः, स्वार्थस्य भेदरूपत्वात् । न ह्यन्वयोऽव्यतिरेकः, अनन्वयो वा व्यतिरेकः, एकान्वयस्य परिहार्याभावे निष्फलचोदनत्वात् । सर्वपरिहारस्य क्वचित् स्थित्यभावे । स चायं भेदोऽरूपः । रूपवत्त्वेन त्वस्य दर्शनं केवलं बुद्धिविप्लव एव ॥

तेनैवापरमार्थोऽसावन्यथा न हि वस्तुनः ॥१३०॥
व्यावृत्तिर्वस्तु भवति भेदोऽस्याऽस्मादितीरणात् ।

रूपं हि परमार्थः । भेदस्येद्रूपं स्यात्—तत् तद्रूपं स्यादतद्रूपं वा ? ताद्रूप्ये तदेवेति नान्यस्ततो भिद्येत । न हि तस्य रूपमन्यस्य स्यात् ।

न तदेव भेदस्य रूपम् । रूपं चासौ । ततोऽन्यदेव स्यात् । ततश्च भावस्तस्माद्व्यावर्तेत । ततोऽस्मात्तस्य भेद इति न स्यात् । यत् खलु यद्भेदाद्व्यावर्तते तदेव तद्भवतीति सोऽस्य भेद इति च न स्यात् । न ह्यन्योऽन्यस्य भेदो भवतीति सम्बन्धाभावात् । इति वा स कार्यकारणभाव इति रूपं तज्जनितं भेद इत्यविशेषात् सर्वकार्याणि स्वकारणानां व्यावृत्तयः स्युः । [1]रूपान्तरत्वे च भेदस्य ततोऽप्यस्य भेद इति भेदोपाधित्वाद् द्रव्यान्तरवत् भेदः स्यात् ।

न हि भेदोपाधिरेव भेदोऽन्यतः इति विशेषनिर्देशात् । ततश्चोपाध्यभावे भेदस्यैवाभावः स्यात् । तस्मान्न व्यतिरिक्तस्तदन्यगत्यभावाच्च वस्तुनो न परमार्थः ॥

कथं तर्ह्यभिन्नस्य वस्तुनः शब्देन चोदने तस्यैवान्यतोऽपि भेदादनन्यस्यैकभेदचोदने सर्वभेदगतेस्तत्र शब्दप्रमाणान्तराणि व्यर्थानि न स्युः ? यस्मात्

एकार्थश्लेषविच्छेदे एको व्याप्रियते ध्वनिः ॥१३१॥

[1] अर्थान्तरत्वे—क०

श्लिष्टं वा तत्र विच्छिन्नं [1]वाच्यं वस्तु न किंचन ।
यस्याभिधानतो वस्तुसामर्थ्यादखिले गतिः ॥१३२॥
[2]भवेन्नानाफलः शब्द एकाधारो भवत्यतः ।

उक्तं प्राग्यथा "संसृष्ट-बाह्याध्यात्मिकभेदा बुद्धिः स्वमेवाभास(सं) व्यवहारमर्थक्रिया-योग्यमध्यवसाय शब्दार्थमुपनयति तत्र" इति । तत्रैव च ते शब्दाः तैस्तैर्भ्रान्तिकारणैः संसृष्टरूप इवाभाति यथास्वेतं विच्छेदाय व्याप्रियन्ते । न चैकसाध्यं व्यवच्छेदमन्यः करोति । सर्वेषां प्रतिनियमात् । न तु विच्छिन्नं किंचिद्वस्त्वाक्षिप्यते, यस्याभिधानाद्वस्तुबलेनाखिले गतिः स्यात् । शब्दानां बुद्धिविप्लवविषयत्वात् । तत्र चावस्तुनि वस्तुसामर्थ्याभावात् । तथाभूतार्थदर्शनद्वारेणायं ज्ञानेन परंपरया भेदाभेदप्रतिभासविप्लवानुसारी व्यवहार इति तस्य तत्प्रतिबन्धे सति तदव्यभिचारस्ततो वितथादप्यन्ते तथाभूत एव वस्तुनि ज्ञानसंवादात् । न पुनर्भिन्नाकारग्राहिणा ज्ञानशब्दानामेव वस्तुविषयत्वात् नानाफलः शब्द एकाधारः, व्याघातात् । यथा वर्णिते तु बुद्धिप्रतिभासाश्रये न दोष इति ॥

विच्छेदं सूचयन्नेकमप्रतिक्षिप्य वर्तते ॥१३३॥
यदान्यं तेन स व्याप्त एकत्वेन च भासते ।
सामानाधिकरण्यं स्यात् तदा बुद्ध्यनुरोधतः ॥१३४॥
वस्तुधर्मस्य संस्पर्शो विच्छेदकरणे ध्वनेः ।
स्यात् सोऽयं स हि तत्रेति नैकवस्त्वभिधायिनि ॥१३५॥
बुद्धावभासमानस्य बुद्ध्यस्याभावनिश्चयात् ।

[3]इत्यन्तरश्लोकाः ॥

तेनान्यापोहविषयाः प्रोक्ताः सामान्यगोचराः ॥१३६॥
शब्दाश्च बुद्धयश्चैव वस्तुन्येषामसंभवात् ।

यदि हि विधि[15b]रूपेण वस्त्वेव शब्दैर्विकल्पैर्वा विषयीक्रियते[4] सोऽयं सर्वार्थ-सर्वाकारप्रतीतिप्रसङ्गोऽसामानाधिकरण्यादयश्चेति मन्यमानः प्रणेता न्यायशास्त्रस्यान्यापोह-विषयावेतौ प्राह ॥

तथाहि—

एकत्वाद्वस्तुरूपस्य भिन्नरूपा मतिः कुतः ॥१३७॥
अन्वयव्यतिरेकौ वा नैकस्यैकार्यगोचरौ ।

---

[1] बाह्य—क॰
[2] बुद्धेस—क॰
[3] इति संग्रहश्लोकाः—क॰
[4] क्रियेत—क

तदेकमनस(श) वस्तु कथ भिन्नाकाराभिर्बुद्धिभिर्विषयीक्रियेत, आकारभेदाश्रयत्वाद्भेदस्य। तस्य चाभेदात् । तदात्मनोऽपि सामान्यस्य तदेवयोगक्षेमत्वात् । तदयमन्योन्यार्थपरिहारेणैकविषययो वृत्यभावात् सामानाधिकरण्यादिर्न स्यात् ।

न च वस्त्वात्मन एकस्य तत्रैव वृत्तिरवृत्तिश्च युक्ता, व्याघातात् । न चान्यत्रावर्तमान सामान्य स्यात् । सामान्यस्य वृत्तिर्न विशेषस्येति चेत् । न । भेदाभावात् । तद्व्येकरूप सामान्य वा भवेद्विशेषो वा । न ह्यसति रूपभेदेऽस्य विभागो युक्त । सति वा, अव्यतिरेको न स्यादित्युक्तम् । तदयमविभागोऽन्वियाद्वा न वा । न पुनरन्वयीऽनन्वयी च ॥

योऽपि भिन्नमेव सामान्यमाह, तस्यापि—

अभेदव्यवहाराश्च भेदे स्युरनिबन्धना ॥१३८॥

यथास्व शब्दा भिन्नमर्थमभिदधाना कथमेकार्थबुद्धयाश्रया स्यु, अर्थान्तराभिधायिनश्चानाक्षेपका निराकाङ्क्षत्वात् कथ विशेषणविशेष्यभावाश्रया ?

सर्वत्र भावाद्व्यावृत्ते भेदे दोषा प्रसङ्गिन ।

यथा ह्यकरतस्माद्भिन्नस्तथान्योऽपीति भेदस्वाऽसामान्यदोषोऽपि नास्ति । परिशिष्टाभावस्तु प्रागवोक्त ॥

अपि च—

एककार्येषु भेदेषु तत्कार्यपरिचोदने ॥१३९॥
चोदयाशक्ति[र्वै]फल्याद्भेदाख्याया समा श्रुति ।
कृता वृद्धैरतत्कार्यव्यावृत्तिविनिबन्धना ॥१४०॥
न भावे सर्वभावाना [स्व]स्वभावव्यवस्थिते ।
यद्रूप शाबलेयस्य बाहुलेयस्य नास्ति तत् ॥१४१॥
अतत्कार्यपरावृत्तिर्द्वयोरपि च विद्यते ।
अर्थाभेदेन च विना शब्दाभेदो न युज्यते ॥१४२॥
तस्मात्तत्कार्यताऽभीष्टाऽतत्कार्याद्विभिन्नता ।
चक्षुरादौ यथा रूपविज्ञानैकफले क्वचित् ॥१४३॥
अविशेषेण तत्कार्यचोदनासम्भवे सति ।
सकृत् सर्वप्रतीत्यर्थं कश्चित् साङ्केतिकीं श्रुतीम् ॥१४४॥
कुर्याद्वृत्तेऽपि तद्रूपसामान्याद्व्यतिरेकिण ।

योऽपि मन्यते—कथमभिन्नमर्थमन्तरेण बहुष्वेका श्रुतिस्तेषामसामान्यात् । एकवृत्तेरन्यत्र प्रत्ययाजननात् । अप्रत्यासत्तिके च प्रत्ययोत्पादेऽतिप्रसङ्गात्तेषु चैवशब्दनिवेशनवैफल्यादेशार्थनियोगाभावात् । भिन्नस्वभावाना पृथग्नियोगे च तथा चोदिताना विभागापरिज्ञानादिति ।

तस्याप्येकमस्तीत्येन लोकेन शब्दो निवेशनीयस्तदेकमेना श्रुति वस्तुशक्त्यैव ध्वनयतीति । नास्त्येतत् । किं तर्हि ? केनचित् प्रयोजनेन केनचिच्छब्द क्वचिन्निवेश्यते । तत्र यद्यनेकमेकयोपयुज्येत, तदवश्य तत्र चोदनीयम् । तस्य पृथक् पृथक् चोदनेति गौरव स्यात् । न चास्यानन्यसाधारण रूप शक्य चोदयितुम् । नाप्यस्यायासस्य किंचित् साफल्यम् । केवलमनेन तत्र योग्यास्तेऽर्थाश्चोदनीया । त एकेन वा शब्देन चोद्येरन्, बहुभिर्वेति स्वातन्त्र्यमत्र वक्तु ।

तदियमेका श्रुतिर्बहुषु वक्त्रभिप्रायवशात् प्रवर्त्तमाना नोप(पा)लम्भमर्हति । न चेयमशक्यप्रवर्त्तना, इच्छाधीनत्वात् । यदि हि न प्रयोक्तुरिच्छा कथमियमेकत्रापि प्रवर्तेत । इच्छाया वा क एना बहुष्वपि प्रतिबद्धु समर्थ ।

प्रयोजनाभावात् अप्रवर्त्तनमिति चेत् । उक्तमत्र—प्रयोजन भिन्नेष्वप्येकस्मात् प्रतीतिरप्रयोजनभेदेनेति, न पुन स्वभावस्यैकत्वात् । यथास्व व्यवस्थितस्वभावाना भावानामन्योन्यरूपासंश्लेषात् कथमेकस्वभावनिमित्त शब्दो भिन्नेषु भवेदित्युक्त प्राक् ।

असत्प्रयोजनव्यावृत्तिस्तु भिन्नानामप्यविरुद्धेति स एवार्थाऽभेद शब्दाभे[16a]दस्य कारण भवतु । तेनमे तत्प्रयोजना इत्यतत्प्रयोजनेभ्यो भिन्ना एवोक्ता । न पुनरेषामन्या तत्कार्यता । अन्यत्रान्यतो भेदाद्यथा चक्षूरूपालोकमनस्कारेष्वात्मेन्द्रियमनोर्थतत्सन्निकर्षेषु वा रूपविज्ञानैककार्येषु तत्कार्यसामान्यचोदनामभवे कुतो रूपविज्ञानमिति व्यवहारलाघवार्थं कश्चित् साकेतिकी श्रुति निवेशयेत् प(स)रो रूपविज्ञानहेतु दारो वेति । अपि नाम सर्वेषा तद्धेतूना सकृत् प्रतीतिर्यथा स्यादिति । न चात्रानुगामि किंचिद्रूपमस्ति केवल तदर्थतया ते भावा अतदर्थेभ्यो भिन्ना इति भेद एवैषामभेद ।

एकजातीयाश्च सर्वे समूहप्रस्तावावस्थाविशेषशब्दा य समस्ता किंचिदेक कार्यं कुर्वन्ति । तेषा तत्र विशेषाभावात् अपार्थिका विशेषचोदनेति सकृत् सर्वेषा नियोजनार्थमेकमप लोक शब्द तेषु नियुङ्क्ते घट इति । तेऽपि सजातीयादन्यतश्च भेदाऽविशेषेऽपि तत्प्रयोजनाङ्गतया तदन्येभ्यो भिद्यन्त इति अभेदात् ततोऽविशेषण प्रतीयन्ते । तत्र घटस्य रूपादय इत्यपि घटस्वभावा रूपादय उदकधारणविशेषादिकार्यसमर्था इति यावत् । सामान्यकार्यसाधनप्रतिबद्धेनात्मना रूपादिशब्दै सिद्धा विशिष्टकार्यसाधनात्तेन विशेषेण विशिष्टास्त एवमुच्यन्ते । न पुनरत्रान्यत् विविधयथावर्णितलक्षण द्रव्यमस्ति, तस्य तादृशस्यानुपलम्भात् ।

एकवचनमपि तदेकशक्तिसूचनार्थम्, संकेतपरतन्त्र वा ।

तथा ये हेतुफलविशेषभूता किंचिदेक साधयन्ति, साध्यन्ते वा तेऽपि सकृत् प्रत्यायनार्थं व्रीह्यादिशब्दै कृतसंकेता कथ्यन्त इति पूर्ववद्वाच्यम् । येऽपि पृथक् समस्ता वा क्वचिदुपयुज्यन्ते ते अवस्थाविशेषवाचिभि शब्दै सकृदेव प्रत्यायनार्थं स्थाप्यन्ते—सनिदर्शना सप्रतिघा वेति तदन्येभ्यो भेदसामान्येन । यथैककार्यास्तत्कार्यचोदनाया तदन्याभेदेन घटादिशब्दै कृतसमयास्तथा कारणापेक्षयाऽप्यनेक एकेन व्यवहारार्थमेव यथा शाबलेयो बाहुलेय प्रयत्नानन्तरीयक कृतको वेति । तथा तत्कार्यप्रतिषेधेनाप्यचाक्षुष शब्दोऽनित्योऽनात्मा वेति । तत्का-

रणप्रतिषेधेनापि—अस्वामिकः शून्य इत्येव यथायोगमन्यदपि वाच्यम् । शून्यानित्यादिशब्देषु यथाकल्पन समीहिताकार बुद्धावारोप्य तद्व्यच्छेदेन व्यपदेश क्रियते । बुद्धिसमीहासदर्शितविभागत्वात् सर्वस्य शब्दार्थस्य । अप्रतिपक्षदोषोपक्षेपादयोऽपि दुर्मतिविस्पन्दितानीत्युपेक्षणीया ॥

अथ

एकवृत्तेरनेकोऽपि यद्येकश्रुतिमान् भवेत् ॥१४५॥

न केवलमेककार्यास्तदन्यभेदादविभेपादेकशब्देनोच्यन्तेऽपि त्वेकवृत्त्याऽप्यनेक एकशब्देनोच्येत को विरोध स्यात् ? उक्तमत्र—नस्योपलब्ध्याभिमतस्यानुपलब्धेरभावोऽनुपलभ्यताया च तद्व्यतिरेकाश्रया व्यपदेशप्रत्यभिज्ञानादयो न भवेयुरित्यादि ॥

अपि च

वृत्तिराधेयता व्यक्तिरिति तस्मिश्च युज्यते ।

यदेतदेकमनेक(कत्र) वर्तमानमेका श्रुति वर्तयति तस्य केय वृत्तिराधेयता वा स्यात् यथा कुण्डे बदराणि वर्तन्त इति, व्यक्तिर्वा तैरभिव्यक्ते ? यद्याधेयता

नित्यस्यानुपकार्यत्वान्नाधार

नित्य हि सामान्यमिष्यते । अनित्यत्वे परापरोत्पत्तेरनेकत्वात् भेदवदेकप्रत्ययायोगात् । नित्यस्य च किं कुर्वाण आधार स्यात् ? तस्य तत्र समवायादाधार इति चेत् । कोऽय समवायो नाम ? अपृथक्सिद्धानामाश्रयाश्रयिभाव । तदेवेदमनुपकारकस्य आश्रयत्व न गमयामोऽतिप्रसङ्गात् ।

तस्मात् समवायसयोगैकार्थसमवायादयोऽपि वस्तुसबन्धा कार्यकारणभावात् न व्यतिरिच्यन्ते । परस्परमन्यतो वाऽनुपकारिणामप्रतिबन्धादप्रतिबन्धस्य चासबन्धात् । यद्यप्येकार्थसमवायिना परस्परमनुपकारस्तत एकस्मादुपकारेण भाव्यमभावे यथोक्तदोषप्रसङ्ग[16b]गात् । अत स्वोपकारकद्वारेणैवापरमपि बुद्ध्या सघट्य स्थाप्यते । तस्मात्तत्रापि कार्यकारणभावकृत एव प्रतिबन्ध । तदयमाश्रय सामान्यस्य स्यात्सत्यनुपकुर्वाणोऽनपेक्षस्याधार इति याचितकमण्डनमेतत् ॥

कथ तर्हीदानीमजनक कुण्ड बदराणामाधार ?

प्रविसर्पत ॥१४६॥

शक्तिस्तद्देशजनन कुण्डादेर्बदरादिषु ।

प्रकृत्यैव गुरुणो द्रव्यस्याऽसमानदेशकार्योत्पादनधर्मण समानदेशकार्योत्पादनभाव आधारकृत । तस्मात्तत्पूर्वक्षणसहकारि कुण्ड तत्रैव बदरकार्य जनयदाधार इत्युच्यते । अन्यथा 'इह कुण्डे बदराणि' इत्यपि न स्यात् । न वै तदुपकारकृतोऽय व्यपदेश । किं तर्हि ? सयोगकृत । किं पुन स तयोरेव सयोग ? ताभ्या जननात् समवायाद्वा । स किमर्थंव न समवैति जन्यते वा ? तस्याऽसामर्थ्यात् । तदसमर्थ पृथक् । तत्र(तद)सहितमपि तादृश-

मेवेत्यनुपकारकत्वात् संयोगेन तद्वत् स्यात् । सहितस्य तदन्योपकारात् विशेषोत्पत्तौ सामर्थ्यम् । कोऽयमजन्यजनकभूता[ना]मनुप(नामु)पकार ? स्वरूपस्य सिद्धेरकार्यत्वात् पररूपक्रियायामपि तत्रानुपकारात् । उभयता[था] कारकयोः किंचित्करत्वेनानुपकारकत्वा-दित्युक्तप्रायम् ।

तस्मात् सर्व एव वस्तुसम्बन्धा जनकस्यैवोपयोगविशेषवशात् प्रविभागेन कार्यकारण-भावात् व्यवस्थाप्यन्ते । तदयं कुण्डादीनामप्याधारभावो बदरादिषु जननशक्तिरेव ॥

न सम्भवति सोऽन्यत्र

न ह्ययं जननविशेषलक्षण आधारभावः सामान्ये सामान्याश्रयस्य सम्भवति, तस्याऽ-जन्यत्वात् ।

तदभावेऽप्यवस्थिते ॥१४७॥

न स्थिति

अथापि स्यात् स्थापक आश्रयः सामान्यस्य । ततः स्थितिहेतुत्वादाधारो न जननादिति । तदयुक्तम् । तस्य तदभावेऽपि स्थानात् । पतनधर्मणा हि भावाना पातप्रतिबन्धादजन-कोऽपि स्थापको भवेत्, अत्रापि यदि कश्चित् प्रतिबन्ध न पर्यनुयुञ्जीत । स हि पातप्रतिबन्धो नार्थान्तरमेव स स्थापयित्वा क्रियेत । अर्थान्तरत्वे तत्रैवाऽयोपयोग इति कः पतत प्रतिबन्ध ? प्रतिबन्धाऽपरोऽपि तुल्य पर्यनुयोगोऽनवस्था वा ।

तस्मात् पाताभाव पातप्रतिबन्ध । स कथं केनचित् क्रियेत ? अभाव करोतीति हि नाभावो नाम कश्चित् कार्यं । तस्य कथचित् कार्यरूपत्वेऽभावायोगात् । तस्माद्भाव-क्रियाप्रतिषेधनिर्देश एष भाव न करोतीति यावत् । तथा चाय न किंचित करोतीति अकिंचित्करस्य क कस्य स्थापको नाम ? तेनाऽय केनचिदप्रतिबद्ध इति न कदाचित्तिष्ठेत् । तस्मात् पातप्रतिबन्ध इत्यपि क्षणिकाना भावानामुपादानसमानदेशोत्पादनमुच्यते ॥

अस्तु नामाजनन पातिना तत्प्रतिबन्धस्तत्करणाद्गतिमतो द्रव्यस्य कश्चित् स्थापकोऽ-प्यस्तु । सामान्यस्याक्रियस्य कि लक्षणा स्थिति कुर्वाण स्थापक स्यात् ? स्थितिर्हि तस्य स्वरूपाप्रच्युतिरेव । सा च नाश्रयायत्ता नित्यत्वात् ।

साप्ययुक्तैव भेदाभेदविवेचने ।

अस्तु नामाश्रयहेतुका स्थिति । सा सामान्यादन्या वा स्यादनन्या वा ? अन्या चेत् । तामेव स आश्रय करोति । सा चाऽप्रतिबद्धा सामान्य इति कि सामान्यस्याश्रयेण ? प्रति-बन्धे वा क प्रतिबन्ध इति वाच्यम् । स्थितिकरण चेत् । तत्रापि तुल्य प्रसङ्गोऽनवस्था च । तत उपकारानवधारणा[त्] तस्यैव स्थितिरित्यप्रतीति । जनन चेत । किमाश्रयणाऽ-नुपकारिणाऽपेक्षितेन ? अपेक्षि(क्षे)ति हि तत्प्रतिबन्ध । स चानाधेयविशेषस्य सामान्यस्या युक्त इति केवल जनयदिति नास्त्यन्य स्थितिहेतु ।

अभेदे वा स्थिते सामान्यात्, स्वरूप[17a]मेव तत्तस्य । तच्च नित्यमस्तीति न स्थितिरस्य केनचित् क्रियते । तस्मान्न सामान्यस्याधारोऽस्ति । तन्नाधेयतास्य वृत्ति ॥

अथ पुन सतोऽपि सामान्यस्याव्यक्तस्य व्यक्त्या ज्ञाना(न)कारणत्वात् तद्व्यक्तिस्तत्र वृत्ति स्यात् । न युक्तमेव भवितु यस्मात्—

विज्ञानोत्पत्तियोग्यत्वायात्मन्यन्यानुरोधि यत् ॥१४८॥
तद्रूपस्य योग्यतायाश्च कारण कारण(क) मतम् ।
प्रागेवास्य च योग्यत्वे तदपेक्षा नु(न) युज्यते ॥१४९॥
सामान्यस्याविकार्यस्य तत्सामान्यवत्त कुत ।

न खलु वै कारकाद्व्यञ्जकस्य कश्चिद्भेद । स्वविषयविज्ञानोत्पादनसमर्थमपर सजातीयोपादानापेक्षमनपेक्ष वा जनयद्भावमेव व्यञ्जक उच्यते । परत्र तु ज्ञानजननशक्तिरनाक्षिप्ता जन्यस्येति जननमात्रेण कारकत्वम् । यो हि यतो विज्ञानोत्पादनयोग्यता प्रतिलभते, स चैव तस्य जन्य स्यात्, साम्य(स्य) स्वभावभूता योग्यता प्रागेवास्तीति न विज्ञानजनने तमपेक्षेत । परभूताया चास्या तैव ततो [1]भव[ती]ति स्थिति[2]प्रसङ्ग ।

तस्माद्व्यञ्जको न त करोति सामान्यमिति अकिंचित्करस्यापेक्षव इति व्याहतमेतत् ।

नन्व(न्व)जनका अपि कार्यत्वाद्धूमादयो व्यञ्जका । सत्यम् व्यञ्जका । न तु धूमपेक्षा(क्ष्या)ग्निरात्मनि ज्ञान जनयति । तथाभूतस्याग्न साक्षादजनकत्वात् । केवलमुपादानबलेनैव हि तत्र ज्ञानमुत्पद्यते, न विषयबलेन । असत्यपि तस्मिन् भावात्, परम्परया लिङ्गानुसारेण । नापि सामान्यलक्षणावभासिना प्रत्ययाना सनिहितविषयता विषयबलेन उत्पत्तिर्वेति निवेदितमेतन्निवेदयिष्यते च ।

तस्माद्ये विषया साक्षादुपयोगेन विज्ञान जनयन्तस्तत्र परमपेक्षन्ते, तेऽवश्य तत आत्मान प्रतिलभन्ते । न चायमात्मप्रतिलम्भ सामान्यस्य नित्यस्य कुतश्चित् सभवति । तस्मान्न तत केनचिद्व्यङ्ग्यम् ।

न वै योग्यताप्रतिलम्भ सामान्यस्य व्यक्ति ब्रूम । किं तर्हि ? स्वाश्रयसमवायम् । स्वाश्रयसमवेत हि तदात्म[न्य]न्यत्र वा विज्ञानहेतुरिति । उक्तमत्र—अजन्यजनकयो कोऽयमाश्रयाश्रयिभावलक्षण समवाय इति । स्वाश्रयसमवायापेक्षो विज्ञानहेतु । तेन जन्य एव स्यात्, तद्धेतो स्वभावस्य प्रागभावात्, पश्चात्ततो भावात् । नित्य तत्स्वभावसद्भावे प्रागपि समवायाद्विज्ञानोदयप्रसङ्गात् ॥

न वै व्यक्ति सामान्यस्य सस्काराद्व्यञ्जिका । किं तर्हि ? तद्ग्राहिण इन्द्रियस्य । सोऽपि—

अञ्जनादेरिव व्यक्ते सस्कारो नेन्द्रियस्य च ॥१५०॥

---

[1] भूतेति—क०

[2] स्थितिवत्प्रसङ्ग—क०

**प्रतिपत्तेरभिन्नत्वात्तद्भावाभावकालयोः ।**

संस्कारमञ्जनादिभिरिन्द्रियं प्रतिपत्तौ किंचिदतिशयमासादयति स्पष्टास्पष्टभेदात्, अतत्कारिणश्चातत्संस्कारकत्वात् । नैवं व्यक्तेरिन्द्रियस्य कश्चित् संस्कारस्तद्भावाभावकालयोस्तत्प्रतिपत्ति प्रत्यविशेषात् । विषयसंस्कारस्त्विन्द्रियाऽविशेषेऽपि तद्विशेषाधानादुपकारी स्यात्, नेन्द्रियसंस्कारः । प्रागदृष्टे दर्शनशक्त्याधानादुपकारक इति चेत् । सोऽपीन्द्रियमर्थं दर्शयन् कथं न प्रतिपत्तेर्भेदकः ? एकप्रतिनियमे च सामान्यान्तरस्य दर्शनं न स्यात् । व्यक्त्या चेन्द्रियसंस्कारात्सहदर्शने तद्व्यपदेश्येषु सामान्येषु कदाचिदनिश्चयो न स्यात्, एकनिश्चयो वा, तस्या अविभागात्तेषु विशेषाभावात् । व्यक्तेर्यदीन्द्रियसंस्कारो यदि नेन्द्रियसंस्कारः सामान्यस्य विज्ञानजननस्वभाव इति स्वभावादच्युतेरनपेक्ष्यमेवेन्द्रियसंस्कारं विज्ञानं जनयेत् ।

संस्कृतेन्द्रियसहकारित्वात् केवलमसमर्थमिति चेत् । कोऽयमनाधेयातिशयस्य सहकारार्थः ? अनित्या हि भावाः सहकारिणो विशिष्टात्मलाभास्तमपेक्षेरन् । यो ह्यपरं जनकं आत्मा, स तदैव[17b]व ततो भवतीति जन्यते(तं)वैषा परस्परतोऽपेक्षा । सामान्यं पुनरलाभाय परं नित्यं तत्स्वभावं किमितीन्द्रियमपेक्षते ? न हि तस्य केवलस्य यो न तत्स्वभावः स पुनः कयचिद्भावी । व्यक्तेरिन्द्रियसंस्कारः, तत्सहकारि सामान्यं विज्ञानहेतुरित्यपि पारम्पर्येण व्यक्तेः कार्यमेव सामान्यमुक्तं स्यात् ॥

अपि च—

> व्यञ्जकस्य च जातीनां जातिमत्ता प्रवोच्यते ॥१५१॥
> प्राप्तो गोत्वादिना तद्वान् प्रदीपादिः प्रकाशकः ।

यो हि यद्विषयविज्ञानहेतुः स तस्य व्यञ्जकः । विज्ञानहेतुत्वं गोत्वादिषु प्रदीपादेरप्यस्ति, तेजःसंस्कारापेक्षिणश्चक्षुषोऽर्थप्रतिपत्तेः । ततः प्रदीपादयो गोत्वादिना तद्वन्तः स्युः । न हि व्यक्तेरपि ज्ञानहेतुतां मुक्त्वाऽन्या काचिदभिव्यक्तिः सामान्यस्य, स्वभावातिशयस्याधातुमशक्यत्वात् । समवायोऽभिव्यक्तिरिति चेत् । उक्तोत्तरमेतत्तस्य समवायायोगादिति । समवायमात्रं हि व्यक्त्या सहास्य जातं नान्यः कश्चिद्विशेष इति पूर्ववत् परस्मादपि न ज्ञानहेतुः स्यात् । समवायादेव विज्ञानहेतुत्वे स्वाश्रयसमवायिनामन्येषामपि दृश्यतापत्तिः । तस्मात् ज्ञानहेतुत्वमेव व्यञ्जकत्वम् । तच्च तुल्यं प्रदीपादावपीति स एव प्रसङ्गः ।

तत्राधेयता न व्यक्तिवृत्तिः सामान्यस्येति । अवृत्तेरनिकत्र ज्ञानहेतुः ॥

अत एव

> व्यक्तेरन्याऽव्यवाऽनन्या येषां जातिस्तु विद्यते ॥१५२॥
> तेषां व्यक्तिव्यपूर्वासु कथं सामान्यबुद्धयः ।

विद्यत एवेत्यवधारणार्थस्तुशब्दः । विद्यमानो हि पदार्थः स्वसामर्थ्येनान्यत्र बुद्धिं जनयन् स्वरूपानुकारिणीं तत्सम्बन्धमपेक्षते अन्यथातिप्रसङ्गात् । न च सामान्यस्य सतः तत्त्वान्यत्वपक्षयोर्न सम्भवतीति ॥

एकत्र दृष्टस्यान्यत्र दर्शनासंभवात्

सा हि बुद्धिरेकभाविनी व्यक्त्यन्तरमेवमास्कन्देत्, भूतग्राहिणी यदि तत्र दृष्टं किंचिदन्यत्र पश्येत् । तच्च

सत् ॥१५३॥

अनन्यत्वेऽन्वयाभावात् अन्यत्वेऽप्यनपाश्रयात् ।

न संभवति ।

स्वभावो हि भावान् तत्त्वमन्यत्वं वा लङ्घयेत्, रूपस्यातद्भूतस्यान्यत्वाव्यतिक्रमात् । इदमेव खलु रूपस्यान्यत्वं यत्तत् (यन्न तत्) । आकारान्तरवदविशेषात् । तच्चेत् सामान्यस्य रूपमनन्यत् । तदेव तद्भवति । अतत्त्वे वस्त्वन्तरवदन्यत्वप्रसङ्गात् । न चैकव्यक्त्यात्मनो व्यक्त्यन्तरान्वावेशो व्यक्त्यन्तरत्वप्रसङ्गात् । ततो नाव्यतिरेकिण सामान्यादन्वयिनी बुद्धिः स्यात् । नापि व्यतिरेकिणस्तस्य क्वचिदनाश्रयणात् । अन्यस्यापि व्यङ्ग्यव्यञ्जकभावावे तावन्यस्य केनचिदनुपकार्यस्याप्रतिबन्धेनाभावात् । असंबन्धाच्च ज्ञानोत्पत्तावतिप्रसङ्गात् । तदयमेकवस्तुदर्शनेनैकवृत्ते प्रत्ययस्यान्यत्र वृत्तिमिच्छंस्तत्त्वान्यत्वे नातिक्रामतीत्युक्तमेतत् ।

तस्मादियमर्थेष्वेकरूपा प्रतीतिर्विकल्पवासनासमुत्थि(त्थि)ता भ्रान्तिरेव । भावभेदो वासनाप्रकृतिश्चास्या आश्रय इति निर्लोठितमेतत्[1] ।

कथं तर्हीदानीं प्रधानेश्वरादिकार्यशब्दा भावेष्वतद्भूतभेदेष्वभेदेन वर्तन्ते ? तेऽपि यथासंकेतवासनोपस्कृतत्वाच्चित्त[2]संतते(ते) सर्वार्थदर्शनेष्वनपेक्ष्याऽपि तत्त्वं तथाध्यवसायास्तथाभूतकल्पितव्यवच्छेदेन विकल्प्य(ल्प)विज्ञानप्रतिभासिन्यर्थे उपादानबलप्रभवविकल्पसमुत्थिता प्रवर्तन्ते । न हि तेषु तथाऽसत्सु किंचिद्व्यतिरिक्तमव्यतिरिक्तं वा सामान्यमस्ति । तथाभावकल्पनया तु तदन्यभेदं प्रतिभत्स्वभिप्रायवशात् स्यात् । तदभिप्रायवशादेव सामान्यं किं नेति चेत् । तेनावश्य हि तत्र भेदो नान्तरीयक[3][18a]त्वादेष्टव्य । स एव सामान्यकार्ये पर्याप्त इति निष्प्रयोजना सामान्यकल्पना ।

यदि सत्स्वसत्सु भावेषु सामान्यबुद्धिर्नैयमर्थवती केवलं विप्लव एवेति नास्माकमस्या विषयनिरूपणं प्रति कश्चिदादरः । क्वचिदविसंवादोऽस्याः वस्तुनि कार्यकारणभावप्रतिबन्धात्, न तथाभूतग्राह्यसमावेशात् । प्रत्यक्षवत् । अतथाभावेऽपि भावादिति निवेदयिष्यामो निवेदितं च । भेदविषयत्वं पुनरस्या बहुलं भिन्नपदार्थदर्शनबलेन तेषु भावाध्यवसायात् । तथाभावकल्पनायामेवापरत्र भावात् ॥

अपि चायं सामान्यमर्थान्तरं कल्पयन् स्वाश्रयमात्रगतं कल्पयेत्, सर्वगतं वाकाशादिवत् । तत्र यदि स्वाश्रयमात्रगतं घटत्वादिशून्येषु प्रदेशेषु घटाद्युत्पत्तौ कथं तेषु भिन्नदेशद्रव्यवर्तिनः सामान्यस्य संभवो यस्मात्तत्पूर्वद्रव्यादुत्पित्सुद्रव्य

[1] निर्णीतमे०—क०

[2] त्वाद्विज्ञानसं०—क०

[3] कतयेष्ट०—क०

न याति

निष्क्रियत्वोपगमात् । न ह्यप्रवृत्तेर्भावस्य ततोऽविचलतो भिन्नदेशेन भावेन तदुभयान्तरालाऽव्यापिनो योगो युक्त. । प्राक् च

न च तत्रासीदस्ति पश्चात्

न च तत्रोत्पन्नो न पुनश्चायात इति क इमं व्याघातभारमुद्वोढुं समर्थोऽन्यत्र जाड्यात् ।

अपि च—

न चांशवत् ॥१५४॥

जहाति पूर्वं नाधारम्

उत्पित्सुदेशाक्रान्तप्रदेशम् । तयोश्च वर्तत इति ।

अहो व्यसनसन्ततिः ।

भिन्नदेशयोर्हि भावयोः सम्बन्धो द्विधा भवेत् । नानावयवात्मतयाऽन्योन्याभ्यामवयवाभ्यां तत्सम्बन्धादालोक-रज्जुवंश-दण्डादिवत् । न हि सावयवत्वमन्तरेण भिन्नदेशाभ्यां युगपत् कस्यचिद्योगो युक्तस्तस्य द्वितीयात्माऽभावात्, एकात्मनश्च तत्प्रदेशवर्तिसम्बन्धरूपत्वात् । अन्यथा तत्संबन्धायोगात् । एकस्याभिन्नस्य तत्र स्थानं तत्र तथैव तेनैवात्मनाऽस्थानमिति तत् स्थिताऽस्थितात्मनोरेकत्व विरोधादयुक्तमेतत् ।

सर्वत्र सर्वदा सर्वाकारास्थितात्मेति चेत् । तत्स्वभावदर्शनाश्रयः प्रत्ययः सर्वत्र सर्वाकारः स्यात् । तथा च गामप्यश्व इति प्रतीयात् । अवस्थितात्मना द्रव्यत्वेन सम्बन्धात् । तत्स्वभावप्रतिपत्त्या च तथा निश्चयात् । तस्य चैकस्यास्पृष्टाकारान्तराऽभावात् । तस्मान्नानवयवमनेकदेशे युगपदाधीयते ॥

पूर्वाधारत्यागे तु भिन्नदेशोऽपि वर्तेत । स च नाभिमत. ।

अन्यत्र वर्तमानस्य ततोऽन्यस्थानजन्मनि ॥१५५॥
स्वस्मादचलतः स्याद्वृत्तिरित्यतियुक्तिमत् ।
यत्रासौ वर्तते भावस्तेन संबध्यतेऽपि न ॥१५६॥
तद्देशिनं च व्याप्नोति किमप्येतन्महाद्भुतम् ।

इत्यन्तरश्लोकौ ॥

यस्य तु सर्वगतं सामान्यं तस्यापि

[१]व्यक्तावेकत्र सा व्यक्त्याऽभेदात् सर्वत्रगा यदि ॥१५७॥

---

[१] व्यक्त्यैवं० म०; व्यक्तौ वै—क०

जातिर्दृश्येत सर्वत्र

न जातेर्नित्याया काचिद्व्यक्तिरिति निषिद्धमेतत् । तस्मादित्थमनपेक्षितपरोपकारा दृश्येत वा, न वा कदाचित्, तस्मिन् स्वभावे व्यवस्थानात् । स्वभावान्तरस्य कुतश्चिद-नुत्पत्ते । अभ्युपगम्यापि व्यक्ति व्यापिन्येकत्र व्यक्त्या भेदाभावाद्व्यक्तैव सर्वत्रेति व्यक्ति-शून्येष्वपि देशेषु दृश्येत ।

न च सा व्यक्त्यपेक्षिणी ।[1]

यदि व्यक्त्यपेक्षिणी स्यात्,

व्यञ्जकाप्रतिपत्तौ हि न व्यङ्ग्य संप्रतीयते ॥१५८॥
विपर्यय. पुन. कस्मादिष्ट सामान्यतद्वतो ।

योऽपि हि—

"स्वाश्रयेन्द्रियसयोगापेक्षप्रतिपत्तिकम् ।
सामान्यमाश्रयशून्येषु देशेषु न दृश्यते ॥"

इति प्रतिसमादधीत तस्याप्यस्त्यवेन्द्रियाश्रयसयोग उपकारक इति । ततस्तद्दर्शी यथास्थिता पश्येत् । न हि तस्या दृश्यमानाया रूपमदृष्ट [18b]तदीय युक्तम् ।

व्यक्तिव्यङ्ग्यत्वात् सामान्यस्य व्यञ्जकरहितेषु प्रदेशेष्वदर्शनमित्यपि मिथ्या । तथा-भूतस्य व्यङ्ग्यव्यञ्जकभावस्य तत्राभावात् । स्वप्रतिपत्त्या परप्रतिपत्तिहेतुर्हि व्यञ्जक प्रदीपादि स्वरूपशून्ये देशे स्वव्यङ्ग्य न दर्शयति नैव व्यक्तिर्विपर्ययात् । कथ हि सा व्यञ्जिका च स्यात् सामान्यस्य, तत्प्रतिपत्तिद्वारेण च वृथा स्यात् ? व्यङ्ग्या च सैव प्रसज्यते । प्रदीपघटवत् कथञ्चित्तत्प्रतिपत्तिमन्तरेणादृश्यरूपत्वात् ॥

अपि चानेन किमसम्भवदभिसमीक्ष्यैव वह्वायास सामान्यवाद आश्रित ? परस्परतो भेदाद्व्यतिरेकिणीषु व्यक्तिष्वन्वयिन प्रत्ययस्यायोगात् । कथमिदानी—

पाचकादिष्वभिन्नेन विनाप्यर्थेन वाचक ॥१५९॥

पाचकपाठकादिष्वन्योन्यमनन्वयिष्वपि शब्दप्रत्ययानुवृत्तिरस्ति पाचक पाठक इति । [illegible] हि तेष्वन्यदेकमभिन्नमस्ति यत्र भिन्नास्तथा प्रतीयेरन् ॥

कर्मास्ति चेत् । व्यक्तिभ्य एव तर्हि स प्रत्ययोऽस्तु । किमिदानी कर्मणान्येन वा ? भिन्नमभिन्नप्रत्ययहेतुर्न भवतीत्येक सामान्यमिष्टम् । तद्यदि भिन्नमपि कर्माभिन्न प्रत्यय जनयेत्, व्यक्तिभि कोऽपराध कृतो येन तास्तथा नेष्यन्ते ? तासामेकरूपत्वात् 'अस्येदम्' इति व्यतिरेकप्रतीतिरतदाकारविशेषवती च न स्यादिति चेत् । उक्तमत्र यथा व्यतिरेको विशेषप्रत्ययाश्च यथास्वमर्थान्तरविवेकादिति ।

---

[1] न च सा जात्यपेक्षिणी—क० अशुद्धमेतत् । सापि न व्यक्त्यपेक्षिणी—स०

तस्माद्धर्मवितावत्

भेदाश्च हेतुः कर्मास्य

पाचकादिभेदप्रत्ययस्य ॥

तत्कर्मजातिरभेदाद्धेतुरिति चेत् ।

न जाति कर्मसंश्रयात् ।

न ह्यर्थान्तरसम्बन्धिनी जातिरर्थान्तरे प्रत्ययहेतुः । गोत्वमिव कर्कादिषु । पाचककर्मसु च कर्मजाति । न च तानि कर्माणि पाचकशब्देनाभिधीयन्ते । किं तर्हि ? तत्कर्माश्रयो द्रव्यम् ॥

तस्य कर्मसामान्यस्य

श्रुत्यन्तरनिमित्तत्वात्

पाक पाक इति हि तत्र स्यात्, न पाचक इति । तस्य कर्मनिमित्तत्वे प्रोक्तम् ।

किं च—

स्थिरत्वभावाच्च कर्मणः ॥१६०॥

न ह्यनित्यं कर्म सर्वदाऽस्ति । तस्य च प्रत्ययस्य कर्मनिमित्तत्वे निरुद्धे कर्मणि न पाचक इत्युच्येत । पचत एव कर्मसद्भावात् ॥

तत एव

असम्बन्धाच्च सामान्यं नायकं शब्दकारणम् ।

अतिप्रसङ्गात्

विनष्टे हि कर्मणि तत्सामान्यं न कर्मणि न कर्तरीति तत्सम्बन्धोऽप्यस्य नास्तीत्यसम्बन्धान्न शब्दज्ञानहेतु, अन्यथाऽभि(ति)प्रसङ्गः स्यात् ।

अतीतमनागतं वा निमित्तोऽस्त्य तयो प्रवृत्तिरिति चेत् ।

कर्मापि नासत् ज्ञानाभिधानयोः ॥१६१॥

निमित्तम् । तयो

अनैमित्तिकतापत्तेः

असद्धि निरुपाख्यं कथं निमित्तं स्यात् ? कार्यकारणलक्षणत्वाद्वस्तुतत्त्वस्य । तदप्यनागतप्राप्तत्वमतीतानागतं कर्मानिमित्तम्, अन्यच्च व्यक्त्यादिकं नेष्टमित्यनिमित्ते ते स्याताम् । तथा च न जातिसिद्धिस्तस्या ज्ञानाभिधानयोर्निमित्तत्वेनेष्टत्वात् ॥

तर्हि पाचकादिशब्दनिमित्तम्, न कर्म, न सामान्यमिति चेत् ।

न च शक्तिरनन्वयात् ।

न हि शक्तिर्नाम किंचिदन्यदेव पाचकादीनाम्, तस्या एव पाकाद्यर्थक्रियोपयोगेन द्रव्यस्यानुपयोगित्वप्रसङ्गात् । तस्या तस्योपयोग इति चेत । किमिदानी शक्त्या ? शक्त्युपयोगाय शक्त्यन्तरस्य व्यतिरेकिणोऽभ्युपगमेतिप्रसङ्गात् द्रव्यमेवोपयुज्यत इति वाच्यम् । तस्योपयोगे शक्तावर्थक्रियायामेवोपयुज्यत इति किं नेष्यते ? किमन्तरालेऽनर्थिकया शक्त्या ? तस्माच्छक्तिरिति द्रव्यमेव तत्कार्यम् । तच्च नान्वेतीति ततोऽन्वयी शब्दो न [19a]स्यात् ॥

सामान्य पाचकत्वादि यदि प्रागेव तद्भवेत् ॥१६२॥

व्यक्त सत्तादिवत्तो चेन्न पश्चादविशेषत. ।

अथापि पाचकत्वमिति सामान्यमेव किंचिद्भवेत् । सत्यर्थं तत्समवायस्याऽकादाचित्कत्वात् । सत्त्वादिवत् प्रागेव व्यक्त स्यात् । यावन्ति हि सामान्यान्यर्थं समवायधर्माणि तानि सहोत्पादेनास्य समवयन्तीति समय । तद्व्यतिक्रमेण तस्य पश्चादप्यविशेषात् न तत्समवाय स्यात् । तत्सबन्धिस्वभाववैगुण्याद्धि स तस्य प्राङ्नासीत् । तत्रैव चास्य स्वभावे स्थितस्य(स्य) पश्चाद्भवतीति दुरन्वयमेतत् ॥

क्रियोपकारापेक्षस्य व्यञ्जकत्वेऽविकारिण ॥१६३॥

नो(ना)पेक्षातिशयेऽप्यस्य क्षणिकत्वात् क्रिया कुत ।

कर्मोपकारकमपेक्ष्य[१] पाचकत्व द्रव्येण व्यज्यत इति चेत् । स्थिरस्वभावस्यानतिशयादविशेषाधायिनि कापेक्षा ? अतिशये वा क्षणिकत्वात् कर्मण प्रतिक्षण स्वभावभूतस्यान्यस्यातिशयोत्पत्तेस्तदपि क्षणिक स्यात् । तत स्वोत्पत्तिस्थानविनाशिन क्रिया कुतो यदपेक्ष व्यञ्जक स्यात् ॥

कथ तर्हीदानीमसत्यभिन्ने वस्तुनि ज्ञानशब्दयोरन्वयिनोर्वृत्ति ? यथा पाचकादिषु । तत् किमिदाननु तदेव चिन्त्यते कथ तेष्वपीति । चिन्तितमेतत् यथा तेषु न सभवतीति । तत् किमिदानीमनिमित्ते ते स्याताम् ? नाऽनिमित्ते । किं तर्हि ? न बाह्यतत्त्वनिमित्ते । यथास्व वासनाप्रबोधाद्विकल्पोत्पत्ति । तत शब्दा । न पुनर्विकल्पाभिधानयोर्वस्तुसत्ता समाश्रय इत्युक्तप्रायमेतत् । यथास्व समयवासनावशाद्विरोधे(धि)रूपसमावेशोऽपरापरदर्शनेऽप्यन्वयिनोस्तयोर्दर्शनात् । न च तत्र तन्निबन्धन कश्चित् स्वभावोऽस्ति परस्परविरोधिनो युगपदेकत्र समावेशायोगात् । अनियमेन तर्हि स्यात । न ह्यनिमित्त भवत् क्वचिद् भवति क्वचिन्न भवतीति नियममर्हति । न खलु वैतदनिमित्त वासनाविशेषनिमित्तत्वात् । बाह्य तु तथाभूत दृश्य नास्तीति ब्रूम । न चासति तस्मिन्न भवितव्यम्, सुप्तैर्तैमिरिकोपलब्धस्वर्थेषु, अभावेषु च समयवासनारोपितरूपविशेषेषु च तथा विकल्पोत्पत्ते । न च तेऽप्यत्मूर्त्यन्त इति सर्वत्र सर्वाकारा, विभागेनैव तथोपलब्धाना विकल्पनात् । उक्त चात्र किंचिदस्माभि —प्रकृत्याऽपि केचिदेकज्ञानकार्या स्वभावभेदादिति ।

---

[१] कर्मोपकारम०—क०

अपि च—

तुल्ये भेदे यया जातिः प्रत्यासत्त्या प्रसर्पति ॥१६४॥

क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम्।

[1]इत्यन्तरश्लोकः ॥

न निर्वृत्तिं विहायास्ति यदि भावान्वयोऽपरः ॥१६५॥

एकस्य कार्यमन्यस्य न स्यादत्यन्तभेदतः।

यद्येते भावा व्यावृत्तिं मुक्त्वा स्वभावेन केनचिदन्वयिना शून्याः, नैषां बहूनामेकं कार्यं स्यात्। यो हि तस्य स्वभावो जनको न हि सोऽन्यस्यास्ति। योऽस्ति [न] स जनकः व्यतिरेकस्य निःस्वभावत्वात्। यज्जनकं तदेव वस्तु। तज्जनकं चापरस्य नास्तीति नापरं जनयेत्। [2]न हि तस्य स्वभावो यो जनकः सोऽन्यस्यापि। यदि स्यात् ततो नि(स तेन) स्वभावेन ततोऽभिन्नः स्यादित्यस्ति स्वभावान्वयः ॥

यद्येकात्मतयाऽनेकः कार्यस्यैकस्य कारकः ॥१६६॥

आत्मैकरूपा(त्मा)पि सोऽस्तीति व्यर्थाः स्युः सहकारिणः।

यद्येकस्वभावत्वादनेक एकस्य कारकः, स तेषामभिन्नः स्वभाव एकसन्निधानेऽप्यस्तीत्य-वैकल्यात् कारणस्यैकोऽपि जनकः स्यात् ॥

यस्मात्—

नार्थस्याभिन्नतद्रूप विशेषाः खलयायिनः ॥१६७॥

न हि तस्याभिन्नस्य स्वभावस्यार्थान्तरे विशेषोऽस्ति, विशेषे वाऽभेदहानेः। स च तत्राप्य-स्तीति नैकस्थितावपि तस्या[पा]योऽस्ति। ये तु विशेषास्तेषां सहस्थितिनियमाभावात् स्यादपायः। न च ते जनका दृष्टाः। सहकारिणामेकस्वभावतया जनकत्वाभ्युपगमात्। ततो जनकस्य स्थानाद्, अस्या[19b]पिनश्नाजनकत्वादेकस्थितावपि कार्योत्पत्तिः स्यात्। न च भवति ॥

[3]अत —

एकापाये फलाभावाद्विशेषेभ्यस्तदुद्भवः।

तत्कार्यमनेकसहकारिसाधारणमेकविशेषापायेऽपि न भवति। पुनरविकलेषु सर्वेषु विशेषेषु भवति। न त्वविकलेष्वभिन्ने रूपे। कार्यं हि कुतश्चिद्भावधर्मि यन्न भवति तत्तस्य वैकल्यात्। न चाऽभिन्नस्य रूपस्यैकस्थितावपि वैकल्यमस्ति, अविकलेऽपि तस्मिन्नभवत्तस्याज-नकात्मतां सूचयति। यत्सान्निध्यवैकल्याभ्यां च भावाभाववत् तत एवोत्पत्तिस्तस्मिन् सति

---

[1] इति संग्रहश्लोकः—क०

[2] स हि—क०

[3] तत —क०

नियमेन भवन्ति । ततस्त[दन्य]स्मादुत्पत्तिकल्पनायामतिप्रसङ्गात् । तस्माद्विशेषा जनका न सामान्यम् । [1]अतस्त एव वस्तु ॥

यस्मात्—

स पारमार्थिको भावो य एवार्थक्रियाक्षमः ॥१६८॥

इदमेव हि वस्त्ववस्तुनोर्लक्षणं यदर्थक्रियायोग्यताऽयोग्यता चेति वक्ष्यामः ॥

स च

अर्थक्रियायोग्योऽर्थो

नान्वेति योऽन्वेति न तस्मात् कार्यसम्भवः ।

तस्मात् सर्वं सामान्यमनर्थक्रियायोग्यत्वादवस्तु । वस्तु तु विशेष एव, तत एव तन्निष्पत्तेः ॥

स्वभावानन्वयात्तर्ह्येकस्य जनकं रूपमन्यस्य नास्तीत्यजनकः स्यात् । जनकत्वे वा भेदाविशेषात् सर्वो जनकः स्यात् । नैतदस्ति । यस्मात्—

तेनात्मना [2]भिन्नमपि हेतुः कश्चिन्न चापरः ॥१६९॥
स्वभावोऽयम्

एकस्य जनकादात्मनो भिद्यमानाः सर्वे समं जनका न वा कश्चिदिति स्यादेतत् यद्येषां न विशेषः सम्भवेत् । ततो भेदाविशेषेऽपि कुतश्चिदात्मातिशयात् कश्चिज्जनको नापरः । स हि तस्य स्वभावो, नापरस्य । न [हि स्व]भावो भावानां पर्यनुयोगमर्हति—'किमग्निर्दहत्युष्णो वा नोदकम्' इति । एतावत् तु स्यात्—कुतोऽस्य स्वभाव इति । निर्हेतुकत्वेऽनपेक्षिणो नियमाभावेनातिप्रसङ्गात् । तस्मात् स्वभावोऽस्य स्वहेतोरित्युच्यते । तस्यापि तज्जननात्मता तदन्यस्मादित्यनादिहेतुपरम्परा । भिन्नानां हि कश्चिद्धेतुर्नान्य, स्वभावादित्यत्र न किञ्चिद्बाधकम् ।

अभेदे तु स्यातां नाशोद्भवौ सकृत् ।

अभेदात् स्वभावेनैव विलक्षणस्य स्वात्मवत् विनाशोत्पत्तिस्थितिनिरोधास्ते न स्युः, तयोपलक्षणादभेदस्य । इदमेव हि भेदाभेदयोर्लक्षणम्—स्वभावान्तरस्य व्यतिरेकोऽव्यतिरेकश्च, विरोधिनोरेकात्मन्यसम्भवात् ॥

भेदोऽपि तेन सर्वं चेत्

---

[1] तास्त—ब०
[2] तेनात्मनापि भेदे हि हे०—ख०; तेनात्मना हि भेदे हि हे०—क० ।

अथवा

भेदे हि कारकं किंचिद्वस्तुधर्मतया भवेत् ॥१७६॥
अभेदे तु विरुध्येते तस्यैकस्य क्रियाक्रिये (यै) ।

भेदमात्राविशेषेऽपि स्वहेतुप्रत्ययनियमितस्वभावत्वात् केचिदेव कारकाः स्युर्नान्ये तत्स्वभावत्वादित्यत्र नैव किंचिद्विरुद्धमस्ति । एकत्वे तु तस्य तत्रैव तथा कारकत्वमकारकत्वं चेति व्याहतमेतत् ॥

[1]भेदोऽप्यस्त्यक्रियातश्चेन्न कुर्युः सहकारिणः ॥१७७॥

न वै सर्वाकाराऽविवेकं ब्रूमो भेदस्यापि भावात् । तस्मात् कश्चिदकारकोऽपीति । तथापि क्वचित् भेदात् सहकारिणोऽकारकाः स्युः ॥

पर्यायेणाथ कर्तृत्वं स किं तस्यैव वस्तुनः ।

अथापि स्यात्—नैव कश्चिदकारकोऽस्ति । सर्वेषां सर्वत्र पर्यायेणोपयोगात्, शक्तेर्वा विपरिणतायास्तन्निवेशिन्या रूपान्तरेणोपयोगादिति । स एव खल्वयं पर्यायो भेदाश्रय एवास्य कथम् ? परिणामो वाऽव्यतिरेकिण्याः ? विनाशे वा कथंचिदेकत्वहानिरिति यत् किंचिदेतत् ॥

किं च—

अत्यन्तभेदाभेदौ हि स्यातां तद्वति वस्तुनि ॥१७८॥
अन्योन्यं वा तयोर्भेदः सदृशासदृशात्मनोः ।

भावाश्चेदभिन्नेनात्मना स्वात्मभूतेन भविनः तद्वन्तः स्युस्तदभिन्नस्वभावात्मत्वाद्भेदस्यापि कुतः परस्परं भेदः ? अथ न स तस्य समान आत्मा । तथा सत्यात्मना तेनापि न तथा युक्तं भवितुम् । तथाभावे ह्यतद्धर्मा स्यात् । न ह्ययं प्रवृत्तिनिवृत्तिमान् स्वभाव एको युक्तः (क्त) ॥

न सर्वात्मनाऽभेद एव

तयोरपि भवेद्भेदो यदि

न हि कश्चिदत्यैकान्तिको भेदोऽभेदो वा, विवेकेन व्यवस्थापनात्—सामान्यं विशेष इति[20b] ।

येनात्मा तयोः ॥१७९॥
भेदः सामान्यमित्येतद्यदि भेदस्तदात्मना ।
भेद एव

यदि सामान्यविशेषयोर्यमात्मानमाश्रित्य सामान्यं विशेष इति स्थितिस्तेनात्मना भेदस्तदा

[1] भेदश्चेदक्रियाहेतुर्न कुर्युः सहकारिणः —पा०

भेद एव। यस्मात्तौ हि तयोः स्वात्मानौ। तौ चेदव्यतिरेकिणौ व्यतिरेक एव सामान्यविशेषयोः, स्वभावभेदात्। स्वभावो हि भाव इति।

तथा च स्यादभिन्नसामान्यविशेषता ॥१८०॥
भेदसामान्ययोर्यद्वद् घटादीनां परस्परम्।

व्यतिरेके च भेदसामान्ययोर्न भेदः सामान्यवान्, न सामान्यं भेदवत्, सम्बन्धाभावात् परस्परं घटादिवदित्युक्तम्॥

अपि च—

यमात्मानं पुरस्कृत्य पुरुषोऽयं प्रवर्तते १८१॥
तत्साध्यफलवाञ्छावान् भेदाभेदौ तदाश्रयौ।
चिन्त्येते स्वात्मना भेदो व्यावृत्त्या च समानता ॥१८२॥
अस्त्येव वस्तु नान्वेति प्रवृत्त्यादिप्रसङ्गतः।

सर्व एव गौरश्वादिर्वाऽभिन्नो वेति भेदमभेदं वा पृच्छन् विशेषणेन भावस्य स्वभावान्तरमधिकृत्य प्रवर्तते। स एव हि तयोच्यते। द्रव्यत्वादयस्तु न तत्र शब्दचोदिताः, यथास्य पृथगभिधानात्। अर्थस्य तदव्यभिचारात्ततो गतिः स्यात्। निर्लोठितं चैतद् आचार्येण।

तदयं गवादिशब्दप्रत्ययोपस्थापितमर्थं भिन्नमभिन्नं वा पृच्छन्नर्थान्तरोपश्लेषेण तत्र किमिति द्विमुखबुद्धिः क्रियते? तस्माद्योऽस्यात्माऽन्यसाधारणो यं पुरस्कृत्य पुरुषो विशिष्टार्थक्रियार्थी प्रवर्तते, यथा गोर्वाहदोहादौ, नान्यसम्भविनोऽर्थस्य, यथा युद्धप्रवेशे, स एव स्वभावो यथास्व शब्दचोदितः, न द्रव्यत्वादिसामान्यम्, तच्चोदनया तदा प्राप्तुमनभिप्रेतत्वात्, गवादिप्रभेदेषा[तु], तदात्मभूताना चानन्वयेन तथानुभयरूपत्वात्। तमेव चाय(य) भाव प्रकारैः पर्यनुयुङ्क्ते। तस्य भेदे द्रव्यत्वाद्यभेदोऽप्यबाधक एव। सर्वत्र स्वभाव[1] एव भेदस्याभ्युपगमात्, सामान्यस्य च व्यावृत्तिलक्षणस्य। स्वभावभूतस्य च सामान्याभेदेऽप्युक्तम्। स्वात्मनैवाभेदे तु तत्स्वभावनिबन्धनार्थक्रियार्थी सम द्वयोरपि प्रवर्तेत। एकोऽपि तामर्थक्रियां तत्स्वभावत्वादेव करोति, तदन्य[स्य]ापि तत्तुल्यमपि(स्यामिति) सोऽपि किन्न करोति?

एतेनैव यदह्रीकाः किमप्यश्लीलमाकुलम् ॥१८३॥
प्रलपन्ति प्रतिक्षिप्तं तदप्येकान्तसम्भवात्।

यदयमह्रीकाः—स्यादुष्ट्रो दधि स्यान्नेति किमप्यश्लीलमयुक्तमपर्यालोचितमपरिनिष्ठानादाकुलं प्रलपन्ति, तदप्यनेन निरस्तं स्वभावेनैकान्तभेदात्॥

तदन्यथा वा

सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ॥१८४॥

---

[1] स्वभावेन—क०

उच्यते साध्यसिद्ध्यर्थं नाशे कार्यत्वसत्त्ववत् ।

अपेक्षितपरव्यापारो हि स्वभावनिष्पत्तौ भावः कृतकः । तेनेयं कृतकश्रुतिः स्वभावाभिधायिन्यपि परोपाधिभेदमाक्षिपति ।

एतेन प्रत्ययभेदभेदित्वादयो व्याख्याताः ।

एवमुपाधिभेदापेक्षः क्वचित्तत्स्वभावहेतुरुच्यते । क्वचिदनपेक्ष्य सामान्येन यथा अनित्यत्व एव सत्त्वम् । क्वचित् स्वभावभूतधर्मविशेषपरिग्रहेण यथा तत्रैवोत्पत्तिः । अनया दिशाऽन्येऽपि स्वभावहेतुप्रविभागा द्रष्टव्याः ॥

सत्तास्वभावो हेतुश्चेत्स सत्ता साध्यते कथम् ॥१८९॥

असन्दिग्धो हि भेदानां व्याहतो हेतुसाध्ययोः ।

यदि सत्त्वमनित्यत्वेऽन्यत्र वा हेतुः स्यात् साध्यमपि कस्मान्नेष्यते ? तत् किंचैवं प्रसाध्यमानं विशेषीभवतीति । न च विशेषः साधयितुं शक्यतेऽनन्वयात् । यथाह— "प्रमाणविषयाज्ञानात्" इति । सोऽयं विशेषो न साध्य एव व्याहन्यते । किं तर्हि ? हेतावपि तुल्यदोषत्वात् । न हि हेतुरनन्वयः सिद्धेरङ्गम्, तत्र संशयात् ॥

नैष दोषो यस्मात् ।

[1]भावोपादानमात्रे तु साध्ये सामान्यधर्मिणि ॥१९०॥

न कश्चिद्धर्मः सिद्धः स्यात् अनिषिद्धं च तादृशम् ।

न सर्वथा सत्तासाधने विशेषः साधितो भवति । भावमात्रविशेषणोऽस्ति कश्चिद्धर्मीति प्रसाधयतोऽनिर्दिष्टस्वभावविशेषस्य कस्यचित् सत्ताभावे विरोधाभावात् । नेह सत्तासाधनप्रतिषेधः, किन्तु सर्वथास्ति कश्चिदिति कथनाऽस्य भेदमपरामृशन् ब्रुवाणः क स्वार्थं पुष्णाति ? तस्मादनेनोपात्तभेद एव साध्यः ।

उपात्तभेदे साध्येऽस्मिन् भवेद्धेतुरनन्वयः ॥१९१॥

सत्तायां तेन साध्यायां विशेषः साधितो भवेत् ।

स हि धर्मी प्रधानलक्षण एको नित्यः सुखाद्यात्मकोऽन्यो वेति यथा कथञ्चिद्विशेषितस्तत्तत्स्वभावः साधितो भवति । स च तथा नान्वेति । यदपि सत्तामात्रमन्वेति न तेन सिद्धेन किंचित् । नन्वेवमग्न्यादिष्वपि प्रसङ्गः । तत्रापि नाग्निसत्तामात्रे कश्चिद्विवादः । विशिष्टाधारविशेषणस्य त्वभिमतस्याऽनन्वयादसिद्धिः । न सैव(न वै स) आधारस्तं विशेषीकरोति । तदयोगव्यवच्छेदेन विशेषणादित्युक्तम्, वक्ष्यते च ।

तस्मात्तत्र सामान्यमेव साध्यते तदयोगव्यवच्छेदेन । न तथेहापि क्वचित् सत्तायाः साधकं प्रधानादिशब्दवाच्यस्यैवार्थस्य क्वचिदभावात् । निर्विशेषणैव सा । कथमभावः ?

---

[1] भावोपादान—क० म०

ज्ञेयाभिधेयप्रमेयत्वे सोऽपि सिद्ध एव प्रधानार्थः । तत् किमिदानीं ज्ञेयमस्तीति सिद्धिरस्तु ? तथापि किं सिद्धं स्यात् ? अन्यत्र तु तदेवाग्निसामान्यं तत्रासिद्धमिति साध्यते । ननु तथापि तदयोगविरहिणा सामान्येनान्वयो न सिद्ध एव । न वै कश्चित्तथाभूतेनार्थेनाऽन्वयं करोति । प्रतिपादयता हि परं धूमोऽग्निनान्तरीयको दर्शनीयः—यत्र धू[22a]मस्तत्राग्निरिति । स तयाग्निमात्रेण व्याप्त्या सिद्धो यत्रैव स्वयं दृश्यते तत्रैवाग्निबुद्धिं जनयति । तत्र साध्ये(ध्य)-[निर्देशे]न न किंचित् । तत्र दर्शन[ात्] सम्बन्धाख्यानमात्रादि(त्राच्चे)ष्टसिद्धेस्तदनिर्देशः कथं तद्विशिष्टे नान्वयः । तदयमन्यविनाभावी सिद्धोऽप्यदिवाग्नेस्तत्प्रदेशायोगव्यवच्छिन्नत्तीति स तथा साध्य उच्यते । न पुनस्तथास्योपन्यासपूर्वकोऽन्वयः, साध्योक्तेरिहानङ्गत्वात् । तत्पूर्वकत्वे वा कः प्रतिज्ञां साधनादपाकरोति ? यथा चाह[1]—

"लिङ्गस्याव्यभिचारस्तु धर्मेणान्यत्र दर्श्यते ।
तत्र प्रसिद्धं तद्युक्तं धर्मिणं गमयिष्यति ॥"

तस्मान्नाग्न्यादिसाधनवत् सत्तासाधनमप्यनवद्यमिति ॥

अपरामृष्टतद्भेदे वस्तुमात्रे [तु] साधने ॥१९२॥
तन्मात्रव्यापिनः साध्यस्यान्वयो न विहन्यते ।

साधने पुनः सत्त्वे स्वभावविशेषापरिग्रहेण वस्तुमात्रव्यापिनि साध्यधर्मे नान्वय-व्याघातः । न हि तत्रापरस्य विशेषपरिग्रहः कार्यः । [2]तन्मात्राश्रयेऽपि साधनसामर्थ्यात्, न साध्यत्वे, वैफल्यात् ॥

अपि च—

नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः ॥१९३॥
धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम् ।

सत्ताया हि साध्याया सर्वस्तद्धेतुर्न त्रयी दोषजातिमतिवर्तते—असिद्ध व्यभिचार विरोध च । तत्र यदि भावधर्मो हेतुरुच्यते, स कथमसिद्धसत्ताके स्यात् । यो हि भावधर्मं तत्रेच्छति स कथं तं भावं नेच्छेत् । स्वभाव एव हि कयाचिदपेक्षया धर्म इति व्यतिरेकीव धर्मिणो निर्दिश्यते । न हि धर्मधर्मिवाचिनो शब्दयोरर्थयो कश्चिद्विशेषोऽस्तीत्युक्तमेतत् ।

अथ पुनरन्यधर्मं भूयादनाश्रितवस्तुनोऽर्थपर्युदासेन व्यतिरेकमात्रस्याभावेऽप्यविरोधात् । यथा न भवति मूर्त्तं इत्यमूर्त्तत्वं निरुपाख्येऽपि स्यात् । निरुपाख्यस्याभावान्न प्रतिषेधविषयत्वेऽपि चेत् । तत् किमिदानीं विधिविषयोऽस्तु ? तदपि नेति चेत् । कथमिदानीं न प्रतिषेध-येत् । तत् किमिदानीं विधिविषयोऽस्तु ? तदपि नेति चेत् । तदेतदवस्तु केवलं इत्यपरि मभवद्विरहा-विषयः, विधिनिमित्त(निवृत्ति)रूपत्वात् प्रतिषेधस्य ? तदेनमवस्तुमात्रं ब्रुवाणः सतोऽन्यमाप्यस्य वृत्तिं साधने, सत्तायां नाव्यभिचारमिति कथं नो मता ? स च स्वयं स्वबाधा उभयधर्मतां प्रचारयाद्भावविच्छेदेन रूपं गमकत्वं कथमानयान् कुर्यात् ?

[1] दिङ्नाग इति कर्णगोमी ।

[2] प्रमाणवा०—४०

उच्यते साध्यसिद्ध्यर्थं नाशे कार्यत्वसत्त्ववत् ।

अपेक्षितपरव्यापारो हि स्वभावनिष्पत्तौ भावः कृतकः । तेनेयं कृतकश्रुतिः स्वभावाभिधायिन्यपि परोपाधिभेदमाक्षिपति ।

एतेन प्रत्ययभेदभेदित्वादयो व्याख्याताः ।

एवमुपाधिभेदापेक्षः क्वचित्सत्स्वभावहेतुरुच्यते । क्वचिदनपेक्ष्य सामान्येन यथा अनित्यत्व एव सत्त्वम् । क्वचित् स्वभावभूतधर्मविशेषपरिग्रहेण यथा तत्रैवोत्पत्तिः । अनया दिशाऽन्येऽपि स्वभावहेतुप्रविभागा द्रष्टव्याः ॥

सत्तास्वभावो हेतुश्चेन्न सत्ता साध्यते कथम् ॥१८९॥

अनन्वयो हि भेदानां व्याहतो हेतुसाध्ययोः ।

यदि सत्त्वमनित्यत्वेऽन्यत्र वा हेतुः स्यात् साध्यमपि कस्मान्नेष्यते ? तत् किन्तु प्रसाध्यमानं विशेषीभवतीति । न च विशेषः साधयितुं शक्यतेऽनन्वयात् । यथाह— "प्रमाणविषयाज्ञानात्" इति । सोऽयं विक्षेपो न साध्य एव व्याहन्यते । किं तर्हि ? हेतावपि तुल्यदोषत्वात् । न हि हेतुरनन्वयः सिद्धेरङ्गम्, तत्र संशयात् ॥

नैष दोषो यस्मात् ।

[1]भावोपाधानमात्रे तु साध्ये सामान्यधर्मिणि ॥१९०॥

न कश्चिद्धर्मः सिद्धः स्यात् अभिसिद्धं च तादृशम् ।

न सर्वथा सत्तासाधने विशेषः साधितो भवति । भावमात्रविशेषणोऽस्ति कश्चिद्धर्मीति प्रसाधयतोऽनिर्दिष्टस्वभावविशेषस्य कस्यचित् सत्तामात्रे विरोधाभावात् । नेह सत्तासाधनप्रतिषेधः किन्तु सर्वथास्ति कश्चिदिति वचनाऽस्य भेदमपरामृशन् ब्रुवाणः कः स्वार्थं पुष्णाति ? तस्मादननोपात्तभेद एव साध्यः ।

उपात्तभेदे साध्येऽस्मिन् भवेद्धेतुरनन्वयः ॥१९१॥

सत्तायां तेन साध्यायां विशेषः साधितो भवेत् ।

स हि धर्मी प्रधानलक्षण एको नित्यः सुखाद्यात्मकोऽन्यो वेति यथा कथञ्चिदपि विशेषितस्तत्स्वभावः साधितो भवति । स च तथा नान्वेति । यदपि सत्तामात्रमन्वेति न तेन सिद्धं किञ्चित् । नन्वेवमग्न्यादिष्वपि प्रसङ्गः । तत्रापि नाग्निसत्तामात्रे कश्चिद्विवादः । विशिष्टाधारविशेषणस्य त्वभिमतस्याऽनन्वयादसिद्धिः । न सैव (न वै स) आधारस्तं विशेषीकरोति । तदयोगव्यवच्छेदेन विशेषणादित्युक्तम्, वक्ष्यते च ।

तस्मात्तत्र सामान्यमेव साध्यते तदयोगव्यवच्छेदेन । न त्विहापि क्वचित् सत्तायाः साधकं प्रधानादिशब्दवाच्यस्यैवाप्यस्य क्वचिदभावात् । निर्विशेषणैव सा । कथमभावः ?

---

[1] भावोपादान—क० म०

ज्ञेयाभिधेयप्रमेयत्वे सोऽपि सिद्ध एव प्रधानार्थे । तत् किमिदानी ज्ञेयमस्तीति सिद्धिरस्तु ? तथापि किं सिद्ध स्यात् ? अन्यत्र तु तदेवाग्निसामान्य तत्रासिद्धमिति साध्यते । ननु तत्रापि तद्योगविरहिणा सामान्येनान्वयो न सिद्ध एव । न वै कश्चित्तथाभूतेनार्थेनाऽन्वय करोति । प्रतिपादयता हि पर धूमोऽग्निनान्तरीयको दर्शनीय —यत्र धू[22a]मस्तत्राग्निरिति । स तथाग्निमात्रेण व्याप्त सिद्धो यत्रैव स्वय दृश्यते तत्रैवाग्निबुद्धि जनयति । तत्र साध्ये(ध्य)- [निर्देशे]न न किंचित् । तत्र दर्शन[तु] संबन्धाख्यानमात्रादि(त्रान्वे)ष्टसिद्धेस्तदनिर्देशो कथ तद्विशिष्टे नान्वय । तदयमन्यविनाभावी सिद्धोऽप्यदिवाग्नेस्तत्प्रदेशायोगं व्यवच्छिनत्तीति स तथा साध्य उच्यते । न पुनस्तथास्योपन्यासपूर्वकोऽन्वय, साध्योक्तेरिहानङ्गत्वात् । तत्पूर्वकत्वे वा क प्रतिज्ञा साधनादपाकरोति ? तथा चाह[१]—

"लिङ्गस्याव्यभिचारस्तु धर्मेणान्यत्र दर्श्यते ।
तत्र प्रसिद्ध तद्युक्त धर्मिण गमयिष्यति ॥"

तस्मान्नाग्न्यादिसाधनवत् सत्तासाधनमप्यनन्वयमिति ॥

अपरानूक्तसंबुद्धे वस्तुमात्रे [तु] साधने ॥१९२॥
तन्मात्रव्याप्तिः साध्यस्यान्वयो न विहन्यते ।

साधने पुन सत्त्वे स्वभावविशेषाऽपरिग्रहेण वस्तुमात्रव्याप्तिति साध्यधर्मे नान्वय-व्याघात । न हि तत्रावश्य विशेषपरिग्रह कार्य । [२]तन्मात्रात्रयेऽपि साधनसामर्थ्यात्, न साध्यत्वे, वैफल्यात् ॥

अपि च—

नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः ॥१९३॥
धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम् ।

सत्ताया हि साध्याया सर्वस्तद्धतुर्न त्रयी दोषजातिमतिवर्तते—असिद्ध व्यभिचार विरोध च । तत्र यदि भावधर्मो हेतुरुच्यते, स कथमसिद्धसत्ताके स्यात् । यो हि भावधर्मं तत्रेच्छति स कथ त भाव नेच्छेत् । स्वभाव एव हि कयाचिदपेक्षया धर्म इति व्यतिरेकीव धर्मिणो निर्दिश्यते । न हि धर्मधर्मिवाचिनो शब्दयोर्वाच्ये कश्चिद्विशेषोऽस्तीत्युक्तमेतत् ।

अथ पुनरुभयधर्मं ब्रूयादनाश्रितवस्तुतोऽर्थ्युदासेन व्यतिरेकभावस्याभावेऽप्यविरोधात् । यथा न भवति मूर्तं इत्यमूर्तत्वं निरात्मन्यपि स्यात् । निरात्मस्वस्याभावात् न प्रतिषेधविषयतेति चेत् । तत् किमिदानी विधिविषयोऽस्तु ? तदपि नेति चेत् । कथमिदानीं न प्रतिषेध-विषय, विधिनिमित्त(निवृत्ति)रूपत्वात् प्रतिषेधस्य ? तदेनदुपयच्छेदमात्र द्वयोरपि संभवद्विपक्ष-प्रचारासद्भाविच्छेदेन स्वयं कथमरं कथमाप्यगान् कुर्यात् ? स च स्वय स्वभावा उभयधर्मतां युतां सद्भोऽप्यभाव्यस्य वृत्ति भावे, सत्तायां वाऽव्यभिचारमिति कथं नोक्तम् ?

---

[१] दिङ्नाग इति धर्मकीर्ति । [२] तन्मात्रा०—क०

अभावधर्मं तु भावमात्रव्यापिनोऽर्थस्य व्यवच्छेदे हेतुः सत्तायाः यदतोऽस्य विरुद्धो हेतुः स्यात्, तस्य भावे क्वचिदसम्भवात्, अभाव एव भावव्यवच्छेदस्य भावात् ।

तदयं त्रिप्रकारोऽपि धर्मः सत्तासाधने न हेतुर्लक्षणभावात् । न चान्या गतिरस्ति । तस्मान्न सत्ता साध्यते । साधनत्वे पुनरस्याः सामान्येन तन्मात्रव्यापिनि वस्तुधर्मे सिद्धसत्ताके धर्मिणि नासिद्धिः । तेन च साध्यधर्मेण व्याप्तिर्यदि क्वचिन्निश्चीयेत न विरोधव्यभिचाराविति नायं प्रसङ्गः । अनिश्चितायां तु व्याप्तौ धर्मिसमाश्रये वा तत्स्वभावतया गमको न कश्चिद् गमकः स्यात् ॥

अत एव स्वधर्मेण व्याप्तः

सिद्धः स्वभावो गमको

वाच्यः । न हि प्रकाशतया प्रकाशयन् प्रदीपस्तद्रूपाप्रतिपत्तौ स्वार्थक्रियां करोति ।

व्यापकस्तस्य निश्चितः ॥१९४॥

गम्यः स्वभावः

तद्धर्मनिश्चयादेव निश्चितो व्यापकत्वेन तस्य धर्मिणो धर्मो गम्यः ।

तस्यायं निवृत्तौ वा निवर्तकः ।

तस्य व्याप्यस्य धर्मस्यायं निवर्तको व्यापकधर्मः स्वयं निवर्तमानः । एवं ह्ययमस्य व्यापकः सिद्धो भवति यद्यस्याऽभावे न भवेत् ।

तदनेन द्विविधस्यापि साधनप्रयोगस्य गमकतालक्षणमुक्तं वेदितव्यम् । द्विविधो हि प्रयोगः साधर्म्येण वैधर्म्येण च यथाहुरन्ये—अन्वयी व्यतिरेकी [22b]चेति । नानयोर्वस्तुतः कश्चिद्भेदोऽस्त्यन्यत्र प्रयोगभेदात् । साधर्म्येणापि हि प्रयोगेऽर्थाद्वैधर्म्यगतिः । असति तस्मिन् साध्येन हेतोरन्वयाऽभावात् । तथा वैधर्म्येऽप्यन्वयगतिरसति तस्मिन् साध्याभावे हेत्वभावस्य संदेहादिति विस्तरेण वक्ष्यामः ॥

अनित्यत्वे यथा कार्यमकार्यं वाऽविनाशिनि ॥१९५॥

अनयोरुदाहरणमनयोर्दर्शयति । तत्रान्वयी—यत् किंचित् कृतकं तत् सर्वमनित्यं यथा घटादयः । शब्दश्च कृतक इति । कृतकस्याऽनित्यत्वेन व्याप्तिं प्रदर्श्य शब्दस्य च कृतकत्वे कथिते सामर्थ्यादेवाऽनित्यः शब्द इति । तस्मान्नावश्यमिह पक्षनिर्देश इत्ययमन्वयिनः प्रयोगः ।

व्यतिरेक्यपि नानित्यत्वाभावे कृतकत्वं भवति । शब्दश्च कृतक इति । सिद्धतत्स्वभावतया तदभावे न भवतः कृतकत्वस्य च भावख्यातौ तदात्मनः सतो भाव इति सामर्थ्यात् सिद्धिः, पूर्ववत् प्रतिज्ञावचनम् । अन्वयस्त्वर्थापत्त्या सिद्धः । न ह्यतदात्मनियतस्य तन्निवृत्तौ निवृत्तिः । तस्मात्तन्नियमं प्रसाध्य निवृत्तिर्वक्तव्या । सा चेत् सिध्यति, तदात्मनियम-मर्थादेव [1]सूचयतीति सिद्धोऽन्वयः ॥

[1] आक्षिपती०—क०

कथमिदानीं कृतकोऽवश्यमनित्य इति प्रत्येतव्यो यन्नैवमुच्यते । यस्मात्

अहेतुत्वाद्विनाशस्य स्वभावादनुबन्धिता ।

न हि भावा विनश्यन्तस्तद्भावे हेतुमपेक्षन्ते । स्वहेतोरेव विनश्वराणां भावात् । तस्माद्य कश्चित् कृतक स प्रकृत्यैव नश्वर ॥

तथा हि

सापेक्षाणां हि भावानां नावश्यंभावितेक्ष्यते ॥१९६॥

निरपेक्षश्च भावो विनाशे । सापेक्षत्वे हि घटादीनां केषांचिन्नित्यतापि स्यात् । येन

बाहुल्येऽपि हि[1] तद्धेतोर्भवेत् क्वचिदसंभव ।

यद्यपि बहुल विनाशकारणानि सन्ति तेषामपि हि स्वप्रत्ययाधीनसंनिधित्वान्नावश्य संनिधानमिति कश्चिन्न विनश्येदपि । न ह्यवश्य हेतव फलवन्तस्तेषां वैकल्यप्रतिबन्धसंभवात् ॥

एतेन व्यभिचारित्वमुक्तं कार्येऽव्यवस्थिते ॥१९७॥
सर्वेषां नाशहेतूनां हेतुमन्नाशवादिनाम् ।
इत्यन्तरश्लोक ॥

तदय भावोऽनपेक्षस्तद्भाव प्रति तद्भावनियत, असंभवत्प्रतिबन्धैव कारणसामग्री सफला कार्योत्पादने ।

नन्वनपेक्षिणामपि केषांचित् क्वचिन्नाशस्य तद्भाव, भूमिबीजोदकसामग्र्यामपि कदाचिदङ्कुरानुत्पत्ते । न । तत्रापि सन्तानपरिणामापेक्षत्वात् । नैव भावस्य कश्चिद- पेक्षा । तत्राप्यन्त्या सामग्री याऽव्यवहिता कार्योत्पत्ते सा फलवत्यव । सैव च तत्राङ्कुरहेतु, अपरस्तु पूर्व परिणामस्तादर्थ्य एव । न च तां तत्र कश्चित् [2]प्रतिबन्धु समर्थ, एकत्र भावे विकारानुत्पत्ते । उत्पत्तौ वैकल्यहाने । तदात्मनस्तथाप्यपुनस्य तदुत्पादनं प्रति वैगुण्यं कारणस्याकुर्वाणस्य प्रतिबन्धहेतोरप्रतिबन्धकत्वात् ।

ननु च यवबीजादयोऽपि शाल्यङ्कुरे जन्ये न सापेक्षा, तदुत्पत्तिप्रत्ययानां कदाचित्तत्रापि संनिधानात् । कथं न सापेक्षा ? यावता स एवंभूत स्वभावो नास्ति यस्तदुत्पादन शालिबीजस्यति । अतस्ततत्स्वभावापेक्षा । एवं तर्हि कृतकानामपि केषांचित् सता वा स एव स्वभावो नास्ति, यो विनश्वर । तस्मात्तत्स्वभावापेक्षत्वान्न विनश्वरा । शालिबीजादीनां स स्वभाव स्वहेतोरिति यो न सद्धेतु सोऽन्तत्स्वभाव स्यात् । नियतशक्तिश्च स हेतुस्व- रूपेण प्रतीत एव । न च स्वभावनियमो नामाकस्मिको युक्तोऽनपेक्षस्य देशकालद्रव्यनियमा- योगात् । तथाऽत्रापि नियमहेतुर्वक्तव्यो यन इमे केचिदनश्वरात्मानो भावा जाता । न चात्र कश्चिन्नियामक स्वभावस्यास्ति ।

[1] बाहुल्येऽपि येन तस्य—अ०

[2] प्रतिबद्धु—अ०

सर्वजन्मिना विनाशसिद्धेर्जन्मिस्वभावो नाशीति चेत् । न [23a]वै जन्म नाशिस्व-भावस्य हेतुः । न चाऽहेतौ स्वभावनियमः । तस्मान्नात्र कश्चिद्धेतौ स्वभावप्रविभागः । तदभावात् फलस्यापि नास्तीत्यसमानम् ।

सेयं निरपेक्षता विनाशस्य क्वचित् कदाचिच्च भावविरोधिनी तदभावे स्वभावेन साधयति । यो हि भावो निरपेक्षः स यदि कदाचिद्भवेत् क्वचिद्वा तत्कालद्रव्यापेक्ष इति निरपेक्ष एव न स्यादित्युक्तम् । स तर्हि नश्वरः स्वभावो निरपेक्ष इत्यहेतुकः स्यात् । नाहेतुकः, सत्ताहेतोरेव भावात् तथोत्पत्तेः । सतो हि भवतस्तादृशस्यैव भावात् ।

नाशस्य सतः कुतश्चिद्भाव इति चेत् । आकस्मिकी तर्हि सत्तेति । नेयं कस्यचित् कदाचित् क्वचिद्विरमेत् । तद्धि किञ्चिदुपलीयेत न वा येन यत्र किञ्चित् प्रतिबद्धमप्रतिबद्धं वा । सेयं सत्ताऽप्रतिबन्धिनी चेत् । न नियमवती स्यात् । तस्माद्येयमाकस्मिकी क्वचित् ।

कथं तर्हीदानीमहेतुको विनाश उक्तः ? जातस्य तद्भावेऽन्यानपेक्षणात् । उक्तं चात्र 'न विनाशो नामाऽन्य एव कश्चिद्भावाद्भाव एव हि नाशः । स एव ह्येकक्षणस्थायी जातः' इति । तमस्य मन्दाः स्वभावमूर्ध्वं व्यवस्यन्ति, न प्राक्, दर्शने [अपि] पाटवाभावादिति । तद्दर्शनं पश्चाद्व्यवस्थाप्यते । विकारदर्शनेनेव विषभक्षं ।

तदयं सत्ताव्यतिरेकेण नान्यत् किञ्चिद्विनाशोऽपेक्षत इति तद्व्यापी ॥

कथं पुनरेतद् गम्यते निरपेक्षो विनाश इति ?

असामर्थ्याच्च तद्धेतोः

असावकारिणः क्रियाप्रतिषेधाच्चेति चशब्दात् । कथमसामर्थ्यम् ? सिद्धे हि भावे कारको न स करोति । नाप्यन्यत्क्रियया तस्य किञ्चिदिति तदतद्रूपाकरणादकिञ्चित्करो नापेक्ष्यते ।

कथं क्रियाप्रतिषेधः ? विनाश इति हि भावाभावं मन्यन्ते । तदयं विनाशहेतुरभावं करोतीति प्राप्तम् । तत्र यद्यभावो नाम कश्चित् कार्यं स्यात् स्वभावः, स एव भाव इति नाभावः स्यात् । तस्मादभावं करोतीति क्रियाप्रतिषेधोऽत्र(ऽस्य) कृतः स्यात् । तथाऽप्ययमकिञ्चित्करः किमित्यपेक्षत इति सिद्धा विनाशे प्रत्यनपेक्षा भावस्य ॥

तस्माद्—

भवत्येव स्वभावतः ॥१९८॥

यत्र नाम भवत्यस्मादन्यत्रापि स्वभावतः ।

सोऽयं क्वचिद्भवन्दृष्टोऽनपेक्षत्वात् स्वभावत एव भवति तथाऽन्यत्रापि स्वभावभावी विशेषाभावाविशेषादिति ॥

सा काचिद्भावविषया द्विधैवानुमितिस्ततः[1] ॥१९९॥
स्वसाध्ये कार्यभावाभ्यां सम्बन्धनियमात्तयोः ।

तस्माद् द्विप्रकारैव वस्तुविषयानुमितिः कार्यलिङ्गा स्वभावलिङ्गा च । यथास्व व्यापिनि साध्ये तयोरेव प्रतिबन्धाल्लिङ्गयोर्लिङ्गिनि यथोक्तं प्राक् ॥

प्रवृत्तेर्बुद्धिपूर्वत्वात्सद्भावानुपलम्भने ॥२००॥
प्रवर्त्तितव्यमेत्युक्ताऽनुपलब्धेः प्रमाणता ।

तृतीयस्तु हेतुरनुपलब्धिरविशेषेण क्वचिदयं गमक इत्युच्यते ॥

असन्निश्चयशब्दव्यवहारप्रतिषेधे हि सर्वैवानुपलब्धिर्लिङ्गम् । सन्निश्चयाद्धि शब्दव्यवहाराः प्रवर्त्तन्ते । [तस्मात्तेः] प्रवृत्तिरित्युक्ता । तथा ह्यनुपलब्धिरेवासत्त्वमित्युक्तम् । तच्च प्रतिपत्तृवशात् न वस्तुवशात् । तावद्धि स भावोऽस्य नास्ति यावदस्याप्रतिपत्तिः, सताऽपि तेन तदर्थाकरणात् । वस्तुतस्त्वनुपलभ्यमानो न सन्नासन्, सतामपि स्वभावादिविप्रकर्षात्कदाचिदनुपलम्भात् । तस्याऽसत्त्वपि तुल्यत्वात् । तदेतत्प्रतिपत्तुः प्रमाणाभावाद्विवृत्तः सत्त्वमनुपलब्धिलक्षणं स्वनिमित्तान् शब्दव्यवहारान् निवर्त्तयति ।

तेन याऽपीयमनुपलब्धिरुपलब्धिलक्षणप्राप्तानां वस्तुतोऽप्यसत्त्वरूपा, अप्रवृत्तियोग्यत्वात्, तस्या अप्येतत्तुल्यम्

[2]प्रामाण्यमत्र विषयेऽसन्निश्चयफलाऽपि सा ॥२०१॥

असत्ता[23b]प्रमाणे प्रमाण ए(मगे)व—न ह्यस्ति सम्भवो यदुपलब्धियोग्य सकलेष्वन्येषु कारणेषु सन्नोपलभ्येत ॥

न पुनः पूर्वाऽसत्तासाधनी यस्मात्

[3]शास्त्राधिकारेऽसम्बद्धा बहवोऽर्था अतीन्द्रियाः ।
अलिङ्गाश्च कथं तेषामभावोऽनुपलब्धितः ॥२०२॥

सोऽप्यसत्ता साधयत्यनुपलब्धिमात्रेण सर्वार्थानां प्रमाणत्रयनिवृत्त्या साधयेत् । तत्र न शास्त्रनिवृत्तिरभावसाधनी, तस्य क्वचिदनधिकारे[ऽ]प्रवृत्तेः । शास्त्रं हि प्रवर्त्तमानं कञ्चित् पुरुषार्थसाधनमुपायमभिधित्सु प्रवर्त्तते अन्यथाऽसम्बद्धप्रलापत्वादप्रामाण्यात् । तत्र च प्रकरणे बहवोऽर्था नावश्यं निर्देश्याः यथा—प्रत्यात्मनियताः कस्यचित् पुरुषस्य चेतोवृत्तयः अनियतनिमित्तभाविनः, कालदेशव्यवहिता वा प्रकरणानुपयोगिनो द्रव्यविशेषाः । ■ तान् शास्त्र

[1] ०विषयाऽनुमिति द्विविधैव सा—म०

[2] मुद्रितवृत्तौ कारिकाऽसौ नोद्धृता । किन्तु 'प्रमाणतामित्यादिना व्याचष्टे' इति वृत्त्यनुरोधात् कारिकांशोऽयम् ।

[3] शास्त्राधिकारासंबद्धा—स०, म० ।

विपयीकरोति । न च तथाविप्रकृष्टेपु स्वसामर्थ्योपधानात् ज्ञानोत्पादनशक्तिरस्ति । न चावश्यमेषां कार्योपलम्भो येनानुमीयेरन् । न च ते प्रमाणत्रयनिवृत्तावपि न सन्तीति शक्यन्ते व्यवसातुम् । तस्मान्न सर्वानुपलब्धि साधनी निवृत्तिनिश्चयस्य ॥

तदियम्

संशयनिश्चयफला नेति स्याद्वाऽप्रमाणता ।

नैवेयमनुपलब्धि प्रमाण व्यवसायफलत्वात् प्रमाणानाम् । न हि प्रवृत्तिनिषेधेऽपीय निःशङ्कपरिच्छेद चेत करोति । संशयादपि क्वचिल्लोकस्य प्रवृत्ते । तथात्वे तन्निरवद्य यदि निश्चयपूर्वं व्यवहरेदिति सेयमप्रवृत्तिफला प्रोक्ता ॥

प्रमाणमपि काचित् स्याल्लिङ्गातिशयभाविनी ॥२०३॥

अत्र न सर्वानुपलब्धिरप्रमाणम् । काचित् प्रमाणमपि लिङ्गविशेषभाविनी यथोदाहृता प्राक् ॥

यत् पुनरुक्तमप्रमाणमनुपलब्धिरिति

स्वभावज्ञापकाऽज्ञानस्याय न्याय उदाहृत ।

यस्य कस्यचित् स्वभावो नोपलभ्यते देशादिविप्रकर्षात् न स तदनुपलम्भमात्रेणासभाव यथोक्त प्राक् । योऽपि ज्ञापकस्य लिङ्गस्य(स्या)भावादतीन्द्रिय प्रतिक्षिप्यतेऽर्थ, स्वभावविशेषो वा, यथा नास्ति विरक्त चेत देवता विशेषो वा, नास्ति दानहिंसाविरतिचेतना(सा)मभ्युदयहेतुनेति प्रत्यक्षेऽप्ययं फलस्यानन्तर्याभावादतत्फलसाधर्म्याद्विपर्यस्तोऽपवदेतापि । न तावता तदभाव एव, व्यवहितानामपि हेतो फलानामुत्पत्तिदर्शनात्, मूषिकाऽलर्कविषविकारवत् तद्भावे विरोधाभावादनानुपलब्धिमात्रमप्रमाणम् ।

भावे किं प्रमाणमिति चेत् । अत एव संशयोऽस्तु, भवेद्वा प्रमाणमित्यप्रतिक्षेप । तदत्र केषाचिदर्थाना स्वभावाना वा दर्शनपाटवाभावात् कारणाना कार्योत्पादननियमाभावाच्च भवेत् ज्ञापकासिद्धि । नैयता तदभाव, पुन पर्यायेण केषाचिदभिव्यक्ते ॥

कार्यं तु कारका[णा]मनभावस्यैव साधकम् ॥२०४॥

स्वभावाऽभावे साध्ये तदनुपलम्भ एवाऽप्रमाणमुच्यते, कारकानुपलम्भस्तु प्रमाणमेव । न ह्यस्ति सम्भवो यदसति कारणे कार्यं स्यात् ।

ननु कदाचित् कारणविनाशेऽपि कार्यस्थितिर्दृष्टा । न ब्रूम कारणस्थितिकालभावि कार्यमिति । हेतुरहिता तु भावोत्पत्तिर्नास्तीत्युच्यते । न च तथा स्थायी भावस्तदुपादान । पारम्पर्यात् तु सन्तानोपकारात् तत्कार्यव्यपदेश । यदस्य कथचिदभाव सिध्येत् तत्फल नास्तीति निश्चीयते ॥

स्वभावानुपलम्भश्च स्वभावेऽर्थस्य सिद्धिमि ।

[24a]स्वभावाभाव एव लिङ्गिनि । स्वभावानुपलम्भोऽपि कश्चित् प्रमाणमेव यदनुपलभ्यमानो व्यापक. स्वभावोऽस्य सिद्ध स्यात् । यथा वृक्षत्व शिंशपायाः ॥

तदभावः प्रतीयेत हेतुना यदि केनचित् ॥२०५॥

यद्यस्य स्वभावस्य व्यापकस्य वाभाव कुतश्चिद् गमकाद्धेतो सिध्येत्, सोऽयमसन्नेव स्वं कार्यं व्याप्य वा निवर्त्तयति । तदभावासिद्धौ निवर्त्येऽपि सशयात् ॥

कथमिदानी भावस्य स्वयमनुपलब्धेरभावसिद्धि ?

दृश्यस्य दर्शनाभावकारणाऽसम्भवे सति ।
भावस्यानुपलब्धस्य भावाभावः प्रतीयते ॥२०६॥

भावो हि यदि भवेद् यथास्य ग्राहकेण करणेनोपलभ्य एव भवेत् । स दर्शनप्रतिबन्धिषु व्यवधानादिष्वसत्सूपलभ्यत एवानुपलब्धस्त्वसन्निति निश्चीयते । तादृश सत उपलम्भाऽव्यभिचाराद् । अयमेव हेतुर्हेतुव्यापकयोरभावेऽपि वेदितव्य ॥

विरुद्धस्य च भावस्य भावे सद्भावबाधनात् ।
तद्विरुद्धोपलब्धौ स्यादसत्ताया विनिश्चय. ॥२०७॥

यो हि भावो येन सह नावतिष्ठते, तदुपादानयोरन्योन्यवैगुण्याश्रयत्वेनारम्भविरोधात्, तयोर्विरुद्धयोरेकस्य भावेऽन्यस्याऽभावगतिर्भवति यथोक्त प्राक् ।

इत्थमनुपलब्धेर्न पृथग्व्यवस्थाप्यते, तत एव विरोधगते । विरोधाच्चाभावसाधनात् ।

भवतु नामैवंविधाया अनुपलब्धेरभावगति । सा पुन कथमनुमानम् ? कथ च न स्यात् ? दृष्टान्तानपेक्षणात् । न ह्यस्या कश्चिद् दृष्टान्तोऽस्ति । किं न निरुपाख्य व्योमकुसुमादि दृष्टान्त ? तदसत् कथमवगन्तव्यम्, येनैव स्यात् ? अनुपलब्ध्यैवेति चेत् । तत्र कथमदृष्टान्तिकाऽसत्तासिद्धि ? सदृष्टान्तत्वे वाऽनवस्थाप्रसङ्ग । तथा चाप्रतिपत्ति. । तन्निरुपाख्याऽभावसिद्धिवदन्यत्रापि दृष्टान्तानपेक्षणादननुमानम् ।

भूयसापि देवानांप्रियो नावधारणपटु । निमित्त ह्यसच्छब्दव्यवहाराणामुपलभ्यानुपलब्धि: । सा स्वसन्निधानात् स्वनिमित्तानेतान् साधयतीति स्वनिमित्तसामग्रीयोग्यसन्निधान सर्वोऽत्र दृष्टान्त । असत्ता पुनरत्रानुपलब्धिरेव । अत एव (एवेयं) कारणात् कार्यानुमानलक्षणात्(र्णेति) स्वभावहेतावन्तर्भवतीति वक्ष्याम ।

सच्छब्दव्यवहारप्रतिषेधेऽपि प्रमाणनिवृत्त्या निमित्तवैकल्याऽभाविनोऽङ्कुरादयो दृष्टान्ता न केवल निरुपाख्यम् । निरुपाख्येऽप्ययमेव प्रवृत्तिनिषिध्यते । अनुपलब्धिरसत्त्वाऽसत्ता सिद्धैव । सोऽयं मूढो निमित्तं तदभाव वाभ्युपगम्य प्रवृत्तिनिवृत्ती विनोदयन् यथाभ्युपगम प्रतिपाद्यते निरुपाख्यवदन्यत्रेति ।

स एव तावदुपलभ्यभाव कथ सिद्ध इति चेत् । एतदुत्तरत्र वक्ष्याम ।

अन्यत्रापि ह्यनुमाने साध्यधर्मेण व्याप्तं साधनमिच्छन् किमिति दृष्टान्तेन प्रत्याय्यो व्याप्यनिर्देशादेव व्याप्नुवतः सिद्धेः ? निश्चितार्थस्यापि स्मृत्यर्थो दृष्टान्त इति चेत् । तदितरत्र समानम् । सोऽयमन्यत्रानुपलम्भमात्रादसद्व्यवहारं प्रतिपद्यमानोऽपीह व्यामूढ इति स्म(स्या)र्यते ॥

अथ यदिदं 'न सन्ति प्रधानादयोऽनुपलब्धेरिति' तत्र कथमसद्व्यवहारविधिः, सद्व्यवहारनिषेधो वा ? कथं च न स्यात् ? तदर्थप्रतिषेधे धर्मिवाचिनोऽप्रयोगादभिधानस्य निर्विषयस्य च प्रतिषेधस्यायोगात् । नैष दोषो यस्मात्

अनादिवासनोद्भूतविकल्पपरिनिष्ठितः ।
शब्दार्थस्त्रिविधो[1] धर्मो भावाभावोभयाश्रितः ॥२०८॥

तस्मिन् भावानुपादाने साध्येऽस्यानुपलम्भनम् ।
तथा हेतुर्न तस्यैवाभावः शब्दप्रयोगतः ॥२०९॥

निवेदितमेतद्यथा नैते शब्दाः [24b] स्वलक्षणविषयाः, अनादिवासनाप्रभवप्रतिभासिनमर्थं विषयत्वेनात्मसात् कुर्वन्ति । वक्तुः श्रोतुश्च तद्विकल्पभाजः, यथाप्रतिभासिवस्तुप्रतिपादनसमीहाप्रयोगात्, तदाकारविकल्पजननाच्च । न चोपादानकार्यप्रत्ययाऽप्रतिभासि रूपं शक्यं तद्विषयत्वेनात्मसात्कर्तुम् । स तु विकल्पः सदसदुभयप्रत्ययाहितवासनाप्रभव इति तत्प्रतिभास्याकाराध्यवसायवशेन च भावाभावोभयधर्म्म इत्युच्यते । तदत्र धर्मिणि व्यवस्थिताः सदसत्त्वं चिन्तयन्ति 'किमयं प्रधानशब्दप्रतिभास्यर्थो भावोपादानो न वेति' तस्य भावानुपादानत्वे साध्ये स एव प्रत्यात्मवेद्यत्वादप्रतिक्षेपार्होऽर्थो धर्मी । न च स एवार्थः स्वलक्षणमिति शक्यं वक्तुम्, असम्प्राप्तनिरुद्धयोरप्यर्थयोस्तस्यानपायात् । वस्तुविपरीताकार[ाभि]निवेशिष्वपि तीर्थान्तरीयप्रत्ययेषु भावात् ॥

परमार्थैकतानत्वे शब्दानामनिबन्धना ।
न स्यात् प्रवृत्तिरर्थेषु दर्शनान्तरभेदिषु ॥२१०॥

अतीताऽजातयोर्वापि न च स्यादनृतार्थता ।
वाचः कस्याश्चिदित्येषा बौद्धार्थविषया मता ॥२११॥

इति सङ्ग्रहश्लोकौ ॥

तस्य च यथासमीहितरूपानुपादानत्वे साध्ये तथानुपलम्भोऽस्य धर्मोऽस्तीति न साधनधर्माऽसिद्धिः । न पुनरत्रायमेव शब्दविकल्पप्रतिभास्यर्थोऽपह्नूयते, तस्य बुद्धावुपस्थापनाय शब्दप्रयोगात्, तदभावे तदयोगात् ॥

अपि च—

शब्दार्थापह्नवे साध्ये धर्माधारनिराकृतेः ।
न साध्यः समुदायः स्यात् सिद्धो धर्मश्च केवलः ॥२१२॥

---

[1] ०विधो धर्मी भावाभावोभयाश्रय —का० च०

यदि हि शब्दार्थ एवापोह्यत प्रधानशब्दवाच्यस्य धर्मिण एव निराकरणात् निराधारं साध्यधर्मं स्यात्। तदयमाधारव्यवच्छेदाऽनपेक्षो न विवादाश्रय इति नोपन्यसनीय एव स्यात्॥

किं च—

सदसत्पक्षभेदेन शब्दार्थानपवादिभिः।
वस्त्वेव चिन्त्यते ह्यत्र प्रतिबद्धः फलोदयः॥२१३॥

अर्थक्रियाऽसमर्थस्य विचारैः किं तदर्थिनाम्।
षण्ढस्य [1]रूपवैरूप्ये कामिन्या किं परीक्षया॥२१४॥

न हि शब्दार्थे सत्यसति वा कश्चित् पुरुषार्थं तु उपरुणद्धि समादधाति वा। यथाऽभिनिवेशमतत्त्वात्। यथातत्त्व चासंप्रीतित्वात्। तस्मादयं प्रवर्त्तमानः सर्वथा सदसत्त्वन्यायमयधीरितविकल्पप्रतिभासो वस्त्वेवाधिष्ठानीकरोति, यत्राय पुरुषार्थः प्रतिबद्धः यथाग्नौ शीतप्रतीकारादि। न ह्यत्र शब्दार्थं समयस्तदनुभवाप्तावपि तदभावात्। तदयमर्थक्रियार्थी तदसमर्थं प्रति न दत्तानुयोगो भवितु युक्तः। न हि वृषस्यन्ती षण्ढस्य रूपवैरूप्यपरीक्षायामवधत्ते॥

यत् पुनरेतदुक्तम्—'कल्पितस्यानुपलब्धिः धर्मः' इति तस्य कोऽर्थः?

शब्दार्थः कल्पनाज्ञानविषयत्वेन कल्पितः।
धर्मो वस्त्वाश्रयाऽसिद्धिरस्योक्तो[2] न्यायवादिना॥२१५॥

कल्पनाविषयत्वाच्छब्दार्थ एव कल्पितस्तस्य वस्त्वाश्रयानुपलब्धिधर्म इत्यभिप्राय इति।

यदुक्तम्—'न प्रमाणत्रयनिवृत्तावपि भावाभावसिद्धिः इति तन्मा भूदन्यत्र प्रमाणनिवृत्तौ निवृत्तिः, तयोरसकलविषयत्वात्। आगमः पुनः किंचित्र व्याप्नोति। तन्निवृत्तिः कथं न गमिकेति? उक्तमत्र—'नागमेषु सर्वार्था उपनिबध्यन्ते, अप्रकरणापन्नत्वादिति'॥

अपि च

नान्तरीयकताऽभावाच्छब्दानां वस्तुभिः सह।
नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः॥२१६॥

न हि शब्दा यथाभावं वर्तन्ते यतस्तेभ्योऽर्थप्रकृतिर्निश्चीयेत। ते हि वक्तुर्विवक्षां सूचयेयुरिति तन्नान्तरीयकतामेव गमयेयुः। न च पुरु[25a]षेच्छा सर्वा यथार्थभाविन्य। न च तदप्रतिबद्धस्वभावो भावोऽन्यं गमयति॥

यत्तर्हीदम्—

"आप्तवादाऽविसंवादसामान्यादनुमानता" [का० २१९]

---

[1] रूपे—म०
[2] स्योक्ता—क० म०

इत्यागमस्यानुमानत्वमुक्तम्, तत् कथम् ? नायं पुरुषोऽनाश्रित्यागमप्रामाण्यमासितुं समर्थोऽत्यक्षफलानां केषांचित् प्रवृत्तिनिवृत्त्योर्महानुशंसाऽपायश्रवणात्, तद्भावे विरोधादर्शनाच्च । तत्सति प्रवर्तितव्ये वरमेवं प्रवृत्त इति परीक्षया प्रामाण्यमाह ।

तच्च

सम्बद्धानुगुणोपायं पुरुषार्थाभिधायकम् ।
परीक्षाधिकृतं वाक्यमतोऽनधिकृतं परम् ॥२१७॥

सम्बद्धो(न्धो) वाक्यानामेकार्थोपसंहारोपकारः । दशदाडिमादिवाक्यानामिवानुपसंहार एवान्यथा वक्तुर्वैगुण्यमुद्भावयेत् । अशक्योपायफलानि च शास्त्राणि फलार्थी नाद्रियेत विचारयितुम्, अपुरुषार्थफलानि च । विषशमनाय तक्षकफणारत्नालङ्कारोपदेशवत्, काकदन्तपरीक्षावच्च । तद्विपर्ययेणोपसंहारवच्छक्योपायं पुरुषार्थाभिधायि च शास्त्रं [१]परीक्षेत यत्नाद्यथा-नर्थसंशयमूलत्वप्रकारात् । तदपि परीक्षायां न विसंवादभाक् प्रवर्तमानं शोभते ॥

कः पुनरस्याविसंवादः ?

प्रत्यक्षेणानुमानेन द्विविधेनाप्यबाधनम् ।
दृष्टादृष्टार्थयोरस्याऽविसंवादस्तदर्थयोः ॥२१८॥

प्रत्यक्षेणाऽबाधनं प्रत्यक्षाभिमतानामर्थानां तथाभावः । यथा नीलादिसुख[दुःख]निमित्तोपलक्षणरागादिबुद्धीनाम् । अतथाभिमतानां चाऽप्रत्यक्षता । यथा शब्दादिरूपसंनिवेशिनां सुखादीनाम्, द्रव्यकर्मसामान्यसमवायादीनां च । तथाऽऽगमापेक्षाऽनुमानविषयाभिमतानाम-ननुमेयानां च तथाभावः । यथा चतुर्णामार्यसत्यानाम्, आत्मादीनां च । आगमापेक्षानुमानेऽपि—यथा रागादिरूपम्, तत्प्रभवमधर्ममभ्युपगम्य तत्प्रहाणाय स्नानाग्निहोत्रादेरनुपदेशः । सेयं शब्दपरिच्छेद्याऽशेषविषयशुद्धिरविसंवादः ॥

आप्तवादाविसंवादसामान्यादनुमानता ।
बुद्धेरगत्याभिहिता परोक्षेऽप्यस्य गोचरे ॥२१९॥

तस्यास्यैवंभूतस्याप्तवादस्याविसंवादसामान्याददृष्टव्यभिचारस्य प्रत्यक्षानुमानाऽगम्येऽप्यर्थे प्रतिपत्तुस्तदाश्रितत्वात् तदर्थप्रतिपत्तिरविसंवादोऽनुमीयते । ततः शब्दप्रभवाऽपि सती न शाब्दवदभिप्रायं निवेदयत्येवेत्यर्थाविसंवादादनुमानमपि ॥

अथवाऽन्यथाऽऽप्तवचनस्याऽविसंवादादनुमानत्वमुच्यते ।

हेयोपादेयतत्त्वस्य सोपायस्य प्रसिद्धितः ।
प्रधानार्थाऽविसंवादादनुमानं परत्र वा ॥२२०॥

हेयोपादेयतदुपायानां तदुपदिष्टानामवैपरीत्यमविसंवादो यथा चतुर्णामार्यसत्यानां वक्ष्य-

[१] परीक्ष्यते—क०

माणनीत्या तस्यास्य पुरुषार्थोपयोगिनोऽभियोगार्हस्य अविसंवादात्, विषयान्तरेऽपि तथात्वोपगमो न विप्रलम्भाय, अनुपरोधात् निष्प्रयोजनवितथाभिधानवैफल्याच्च वक्तु । तदेतदगत्योभयथाऽप्यनुमानत्वमागमस्योपवर्णितम्—वरमागमात् प्रवृत्तावेव प्रवृत्तिरिति । न खल्वेवमनुमानमनु(न)पायमनान्तरीयकत्वादर्थेषु शब्दानामिति निवेदितमेतत् ॥

पुरुषातिशयापेक्षं यथार्थमपरे विदु ।

यथार्थदर्शनादिगुणयुक्तपुरुष आप्त । तत्प्रणयनमविसंवाद इत्यन्ये ।

इष्टोऽयमर्थ शक्येत ज्ञातु सोऽतिशयो यदि ॥२२१॥

सर्व एवायमागममनागमं वा प्रवृत्तिकामोऽन्वेषते प्रेक्षापूर्वकारी न व्यसनेन—अपि ना[25b]माऽतोऽनुष्ठेयं ज्ञात्वा प्रवृत्तोऽर्थवान् स्यामिति । स वक्तृदर्शनाऽविसंवादप्रत्ययेनान्यत्रापि प्रवर्तत एवप्रायत्वाल्लोकव्यवहारस्य ॥

पुरुषपरीक्षया तु प्रवृत्तावप्रवृत्तिरेव, तस्य तथाभूतस्य ज्ञातुमशक्यत्वात्, नानिष्टे, तादृशामवितथाभिधानात् । तथाहि—

अयमेव न वेत्त्यन्यदोषाऽनिर्दोषताऽपि वा ।

दुर्लभत्वात् प्रमाणानां दुर्बोधेत्यपरे विदु ॥२२२॥

चैतसेभ्यो हि गुणदोषेभ्य पुरुषा सम्यग्मिथ्या[१]प्रवृत्तय । ते चातीन्द्रिया स्वप्रभवकायवाग्व्यवहारानुमेया स्यु । व्यवहाराश्च प्रायशो बुद्धिपूर्वमन्यथाऽपि कर्तुं शक्यन्ते, पुरुषेच्छावृत्तित्वात्, तेषां च चित्राभिसन्धित्वात् । तदयं लिङ्गसङ्करात् कथमनिश्चिन्वन् प्रतिपद्येत ॥

अथ किं नैव स तादृश पुरुषोऽस्ति यो निर्दोष ?

सर्वेषां सविपक्षत्वात् निर्ह्रासातिशयश्रितम्[२] ।

सात्मीभावात् तदभ्यासाद्धीयेरन्नास्र(स्र)वा क्वचित् ॥२२३॥

स तु प्रहीणास्र(स्र)वो दुर्ज्ञान । दोषा हि निर्ह्रासातिशयधर्माणो विपक्षाभिभवोत्कर्षापकर्षं साधयन्ति ज्वालादिवत् । ते हि विकल्पप्रभवा सत्यप्युपादाने कस्यचिन्मनोगुणस्याभासादपकर्षेण तत्पाटवे निरन्वयविनाशधर्माण स्युर्ज्वालादिवदेव । तेन स्यादपि निर्दोष ॥

कथं निर्दोषो नाम ? यावता दोषविपक्षसात्मत्वेऽपि दोषसात्मनो विपर्यासोत्पत्तिवद् यथाप्रत्ययं दोषोत्पत्तिरपि । नायं दोष । यस्मात्—

निरुपद्रवभूतार्थस्वभावस्य विपर्ययै ।

न बाधा यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपातत ॥२२४॥

---

[१] प्रथमपृष्ठत एतत्पर्यन्तं श्रीसांकृत्यायनेन निब्बतीभाषात स्वसम्पादितवृत्तौ अनूदितम्—द्रष्टव्या—व० टिप्पणी सं० १ पृ० ३९७

[२] ०शयाश्रिता—व० । नास्त्येतत् पाठान्तरं वृत्त्यनुसारि । ०श्रय भित—म० अनुवादेनत् ।

न हि स्वभावो यत्नेन विना निवर्त्तयितुं शक्यः । श्रोत्रियकापालिकघृणावत् । यत्न-श्च प्राप्यनिवर्त्त्ययोः स्वभावयोर्गुणदोषदर्शनेन क्रियेत । तच्च विपक्षसात्मनः पुरुषस्य दोषेषु न संभवति । तस्य निरुपद्रवत्वात् । सर्वदोषप्रहाने १, पर्यवस्थानजन्मप्रतिवद्धदुःखस्य विवेकात् २, प्रशमसुखरसस्यानुद्वेजनाच्च ३ । अभूतार्थं खल्वप्युपादानवशभावि सन्तानस्य विपर्ययोपादानान्न स्यात् । न तु भूतार्थं वस्तुबलोत्पत्तेः । अभूतार्थाश्च दोषाः न प्रतिपक्ष-सात्म्यबाधिनः । तस्मान्न पुनर्दोषोत्पत्तिः । यत्नेऽपि बुद्धेर्गुणपक्षे पातेन प्रतिपक्ष एव यत्ना-धानात् परीक्षावतो विशेषेणादुष्टात्मनः ॥

कः पुनरेषां दोषाणां प्रभवो यत्प्रतिपक्षाभ्यासात् प्रहीयन्ते

सर्वासां दोषजातीनां जातिः सत्कायदर्शनात् ।
साऽविद्या तत्र तत्स्नेहस्तस्माद् द्वेषादिसंभवः ॥२२५॥

न हि 'नाहं न ममेति' पश्यतः परिग्रहमन्तरेण क्वचित् स्नेहः । न चाऽननुरागिणः क्वचिद् द्वेषः । आत्मात्मीयानुपरोधिनि, उपरोधप्रतिघातिनि च तदभावात् । तस्मात् समानजातीया-भ्यासजमात्मदर्शनमात्मीयग्रहं प्रसूते । तौ च तत्स्नेहम् । स द्वेषादीनि[ति] सत्कायदर्शनजाः सर्वे दोषाः तदेव चाऽज्ञानमित्युच्यते ॥

मोहो निदानं दोषाणामत एवाभिधीयते ।
सत्कायदृष्टिरन्यत्र तत्प्रहाणे प्रहाणतः ॥२२६॥

मोहं दोषनिदानमाहुरमूलस्य दोषानुत्पत्तेः । पुनरन्यत्र सत्कायदृष्टिम् । तच्चैतत् प्रधाननिर्देशे सति स्यात्, अनेकजन्मना दोषाणामेकोत्पत्तिविरोधात् । न च द्वयोः प्राधान्ये एकैकनिर्देशः परभागभाक् । उभयथाप्येकनिर्देशे न विरोधः । प्राधान्यं पुनस्तदुपादानत्वेन तत्प्रहाणे दोषाणां प्रहाणात् । तस्मात् सम्भवति सत्कायदर्शनजन्मनां दोषाणां तत्प्रति-पक्षनैरात्म्यदर्शनात् प्रहाणम् । स तु क्षीण[26a]दोषो दुरन्वयो यदुपदेशादयं प्रतिपद्येत ॥

मा भूत् पुरुषाश्रयं वचनमागमः प्रणेतुर्दुरन्वयत्वात् ।

गिरां मिथ्यात्वहेतूनां दोषाणां पुरुषाश्रयात् ।
अपौरुषेयं सत्यार्थमिति केचित् प्रचक्षते ॥२२७॥

न खलु सर्व एवायमः प्रमाणविप्रलम्भः । विप्रलम्भहेतूनां दोषाणां पुरुषाश्रयादपौ-रुषेयं सत्यार्थमित्येके । कारणाभावो हि कार्याभावं साधयति ॥

य एववादिनस्तानेव प्रति

गिरां सत्यत्वहेतूनां गुणानां पुरुषाश्रयात् ।
अपौरुषेयं मिथ्यार्थं किं नेत्यन्ये प्रचक्षते ॥२२८॥

यथा रागादिपरीतः पुरुषो मृषावादी दृष्टस्तथा दयाधर्मतादिगुणयुक्तः सत्यवाक् । तद्यथा वचनस्य पुरुषाश्रयाद् मिथ्यार्थता, तथा सत्यार्थताऽपीति । स निवर्त्तमानस्तामपि

निवर्तयतीत्यालर्थक्य स्यात् । विपर्ययो वा । न हि शब्दाः प्रकृत्याऽर्थवन्तः, समयास्ततोऽर्थख्यातेः कायसंज्ञादिवत् । अप्रातिकूल्यं तु योग्यता, समये तदिच्छाप्रणयनात्, निसर्गसिद्धेर्व्विच्छावशात् प्रतिपादनायोगात् । तेऽनर्थकाः पुरुषसंस्कारादर्थवन्तः स्युः । तत्संस्कार्यतैव चैषां पौरुषेयता युक्ता नोत्पत्तिः । तत एवार्थविप्रलम्भात् । उत्पत्तावप्यन्यथा समितो नोपरोधी, तदन्यपुरुषधर्मवत् । तदयं निवर्तमानः स्वकृतसमयसम्भवामर्थप्रतिभां निवर्तयति । तत्कृतस्तन्निवृत्त्या सत्यार्थता ?

अथ पुनरुत्पत्तिरेव पौरुषेयता, न समयाख्यानम्—

अर्थज्ञापनहेतुर्हि संकेतः पुरुषाश्रयः ।
गिरामपौरुषेयत्वेऽप्यतो मिथ्यात्वसम्भवः ॥२२९॥

किं ह्यस्यापौरुषेयतया यतो हि समयादर्थप्रतिपत्तिः, स पौरुषेयो वितथोऽपि स्यात् । शीलसाधनस्वर्गवचनं तदन्यथासमयेन विपर्यासयेत्तेनाऽन्यथार्थमपि प्रकाशनसम्भवात् स एव दोषः ।

सम्बन्धाऽपौरुषेयत्वे स्यात् प्रतीतिरसंविदः ।

स्यादेतत्—अकार्यसम्बन्धा एव शब्दाः । न तेऽर्थेषु पुरुषैरन्यथा विपर्यस्यन्ते तेनादोष इति । किमिदानीं संकेतेन ? स हि सम्बन्धो यतोऽर्थप्रतीतिः । स चेदपौरुषेयो नायं समयमपेक्षेत । अप्रतीत्याश्रयो वा कथं सम्बन्धः ?

संकेतात्तदभिव्यक्तावसमर्थोऽप्यन्यकल्पना ॥२३०॥

न वै सम्बन्धो विद्यमानोऽप्यनभिव्यक्तः प्रतीतिहेतुः । संकेतस्त्वेनमभिव्यनक्ति । स तर्हि सिद्धोपस्थायी किमकारणं पोष्यते ?

नन्वियान् सम्बन्धस्य व्यापारो यदर्थप्रतीतिजननम् । तत् समयेनैव कृतमिति । समर्थं साऽयोग्ये समयः समर्थ इति योग्यता तत्समयनात्चेत् । तत् किं वै शब्दः संबन्धोऽस्तु । समर्थं हि स्व शब्दस्य योग्यता, कार्यकरणयोग्यतावत् । सा चेदर्थान्तरं किं शब्दस्येति सम्बन्धो वाच्यः । योग्यतोपकारः इति चेत् । न । नित्यायाः निरतिशयत्वात् । तत्राप्यनिमित्तज्ञानुपकारसिद्धेः । योग्यतायाः च स्वतो योग्यत्वेऽर्थे एव किं नेष्यते ?

समयस्तर्हि कथं शब्दार्थसम्बन्धः ? पुरुषेषु वृत्तेः । नाभिधाया सिद्धाना कश्चित् सम्बन्धोऽभेदप्रसङ्गात्, अनपेक्षणाच्च । अर्थविनाशसमीहाप्रेरिता वाक् 'अत इदम्' इति विदुषः स्वनिदानामाभिनमर्थं सूचयतीति बुद्धिरूपवाग्विकल्पयोर्जन्यजनकभाव सम्बन्धः । ततः शब्दात् प्रतिपत्तिरविनाभावात् । तदाख्यानं समयः, तत प्रत्यायकसम्बन्धसिद्धेः सम्बन्धाख्यानात् । न तु स एव सम्बन्धः ॥

अस्तु वाच्य एव नित्यः सम्बन्धेन

गिरामेकार्थनियमे न स्यादर्थान्तरे गतिः ।

न हि तेन सबन्धेनाऽसबद्धे(द्धे)ऽर्थे प्रतीतिर्युक्ता, तस्य वैफल्यप्रसङ्गात् । दृष्ट-द्वेच्छावशात् कृतसमय सर्वं सर्वस्य दीपक ।

अनेकार्थाभिसबन्धे विरुद्धव्यक्तिसभव ॥२३१॥

अथ मा भूद् दृष्टविरोध इति सर्वं सर्वस्य वाचक । तथा न सर्वं सर्वसाधन, असकरात् कार्यकारणताया । तत्र प्रतिनियतसाधनेऽभिमतेऽर्थे [1]सर्वसाध्यसाधनसाधारणस्य[26b] शब्द येष्टव्यक्तिमेव समयकार करोतीति कुत एतत् ?

सोऽनियतो नियम पुरुषात् प्रतिपद्यते तदा

अपौरुषेयतायाश्च[2] व्यर्था स्यात् परिकल्पना ।

अपि नामाऽसकीर्णम(मेषा)र्थं जानीयामिति सकरहेतु पुरुषोऽपाकीर्णं । तत्र मादृशा पुरुषै क्वचित् प्रयुक्ता सकीर्यन्ते, ते तादृशा एव सव[र्थ]साधारणा सन्त क्वचित्तद्विनि-नियम(मि)ता, तत्त्वापरिज्ञानात् । प्रकृत्यैव वैदिका नियता इति चेत् । नोपदेशमपेक्षेरन् । अन्यथा च सकेतेन [न] प्रकाशयेयु । व्याख्याविकल्पश्च न स्यात् । उपदेशस्य चेष्टसमान शक्यविकल्पे नास्तीति व्यर्थैवाऽपौरुषेयता ॥

वाच्यश्च हेतुभिन्नाना सबन्धस्य व्यवस्थिते. ॥२३२॥

अर्था हि वाह्या न एव शब्दस्य, [नापि] शब्दोऽर्थानाम्, येनाभिप्रायनतया व्यवस्था भेदेऽपि नान्तरीयकता स्यात् । कृतकत्वाऽनित्यत्ववत् । नाऽप्येते विवक्षाजन्मानो ध्वनय, अजन्मानो वा विवक्षाव्यङ्ग्या । नार्थायत्ता । तत् कथमिदानी तत्प्रतिनियमसाध्य तदन्वय साधयेयु । न ह्यप्रतिबद्धस्तरसाधन इति ॥

असत्कार्यतया पुभि सर्वथा स्यात् निरर्थता ।
सस्कारोपगमे मुख्य गजस्नानमिव[3] भवेत् ॥२३३॥
इति सग्रहश्लोक ॥

अपि च । शब्दार्थयो सबन्धो नित्यो वा स्यादनित्यो वा ? यद्यनित्य पुरुषेच्छा वृत्तिरवृत्तिर्वा ? अपुरुषाधीनत्वे पुरुषाणा यथाभिप्राय देशादिपरावृत्त्या तेन प्रतिपादन न स्यात् । इच्छायामप्यनायत्तस्य कदाचिदयोगात् पर्वतादिवत् । अयमेव नित्यत्वेऽपि दोषस्तस्य स्थिररूपस्य परावृत्त्ययोगादिति सम सर्वावस्थानेऽभीष्टप्रतिनियमाऽभावात् । ततो विशेषप्रति-पत्तिर्न स्यादिति पूर्ववत् प्रसङ्ग । इच्छावृत्तौ पौरुषेयत्वमिति विप्रलम्भशङ्का ॥

अपि च—

सबन्धिनामनित्यत्वान्न सबन्धोऽस्ति नित्यता ।

---

[1] इत तिब्बतीभाषात अनूदित श्रीसाङ्कृत्यायनेन स्वसपादितवृत्तौ ।

[2] ०तायाञ्च—क० म० । अशुद्धमेतत् न वृत्त्यनुसारि । [3] स्नानमिव—क० म०

पराश्रयो हि सबन्धोऽप्रतिबन्धे तयो सबन्धिताऽयोगात् । स चाश्रयोऽनित्य । अपायेऽस्य सबन्धस्याप्यपायोऽन्यथा नाश्रित स्यात् । ततो न नित्य ॥

तदाश्रयार्थश्च वक्तव्यः ।

नित्यस्यानुपकार्यत्वादकुर्वाणश्च नाश्रय ॥२३४॥

जातेर्वाच्यत्वादि(द)दोष इति चेत् । न । तद्वचने प्रयोजनाभावादिति निर्लोठितमेतत् । सर्वत्र च जात्यसभवादयोगो [यथा] याद्रच्छिकेषु व्यक्तिवाचिषु । सर्वदा जातिचोदने विशेषान्तरव्युदासेन प्रवृत्त्ययोगाच्च । तस्मादन्वयव्यतिरेकिणो भावस्य भावाभावौ सबन्ध. ॥

अर्थैस्त स शब्दानां सत्कार्यं पुरुर्वविधा ।

तावेव भावाभावौ आश्रित्याऽसृष्टावपि ससृष्टौ पुरुषस्य व्यवहारभावनात प्रतिभात इति पौरुषेयो भावाना सश्लेष ।

किं च, आश्रयविनाशान्नष्टे सबन्धे स शब्द पुनरसबद्ध(बद्ध)त्वान्नापूर्वेण योज्येत । उत्पन्नोत्पन्नाश्च भावा स्थितसबन्धाभावादसबन्धिनोऽवाच्याश्च स्यु ॥

तथापि

अर्थैश्च सहोत्पादे

कल्प्यमाने

न स्वभावविपर्यय ॥२३५॥

शब्देषु युक्त

अथ मा भूत्पूर्वसबन्धस्य शब्दस्यार्थान्तरे वैगुण्यमर्थाना च भवान्तरेत्युत्पन्नोऽयं सबन्धवान् यदुत्पद्येत, सबन्ध उत्पन्नोऽपि न शब्दे स्यात् । तस्य तेनाऽसबन्धिस्वभावस्य स्वभावविपर्यय-मन्तरेण तद्भावायोगात् । अर्थेन सहोत्पन्नस्य चाऽन्यत सिद्धस्यानुपकारिणि नर्थेऽसमाश्र-याच्च ।[1] तस्यापि तदुत्पत्तिसहकारित्वे समर्थस्य नित्योत्पादनप्रसङ्ग , सम[27a]पक्षस्याशि-त्यस्यानुपकारात् । असामर्थ्येऽपि पश्चादपि स्वभावात्यागादशक्ति । वस्तुभूते तु

सबन्धे न्याय एषो विकल्पिते ।

न हि भावस्वभावापेक्षी पुरुषभावनाप्रतिभासी तदपेक्षालक्षण सबन्ध । सोऽत्र नित्या-नामप्यपरावर्त्तयन् स्वभाव कुतश्चित् स्वयमुत्प्रेक्ष्य घटयेदिति तेऽपि तथा स्युर्न च व्यवनधर्माण ॥

यदुक्तम्—आश्रयापायेनाश्रितसबन्धविनाशादनित्य स इति । तत्र

नित्यत्वादाश्रयापायेऽप्यनाशो यदि जातिवत्[2] ॥२३६॥

---

[1] असत्वाच्च क०  [2] यदि मतम्—क० स०

न ह्येकम्, अनेकया बुद्ध्या क्रमेण ग्रहणायोगात् । न च तदेकया ग्राह्यम्, वर्णानुक्रम ग्रहणात् । एकवर्णग्रहणकाले चानवबुद्धिव्यतिक्रमात् क्षणिकत्वाद्बुद्धीनाम् क्षणस्यैकपरमाणुव्य तिक्रमकालत्वात् । आधिक्ये विभागवत पर्यवसानायोगात् । अनेकाणुव्यत्ययनिमेषतुल्यका लत्वादन्त्यवर्णपरिसमाप्ते । यथानुभव स्मरणात् स्मृतिरपि तत्कालैव । अनुभवस्मरणानु क्रमयोर्विलोपानुपलक्षणत्वाच्च ।

नाप्यनेक पदादि, अभेदप्रतिभासनाद्बुद्धे, तदनेकत्वस्य निषेत्स्यमानत्वाच्च ।

तत्र वस्तु, तस्यैतद्विकल्पानतिक्रमात् । वस्तु च सबन्ध । स कथ तदाश्रय स्यात्, आश्रयणीमाश्रयोगात् । अनाश्रितो ह्येव स्यात् । तथा चासबध(बद्ध) ।

तस्मान्न स्वाभाविक शब्दार्थयो सबन्ध । तदभिप्रायप्रयोगादुत्तरोऽभिव्यक्तो वा शब्दो तदव्यभिचारीति नत्वमस्य सबन्ध । सा चोत्पत्तिरभिव्यक्तिर्वाऽव्यभिचाराश्रय पौरुषेयीति पौरुषेय एव सबन्ध । तद्द्वारेण चार्थप्रत्यायने [न] नियम शब्दानामित्यपौरुषेयत्वेऽपि स एव विप्रलम्भ ॥

अपौरुषेयताऽपीष्टा कर्तृणामस्मृते किल ॥२४२॥

याऽपीयमपौरुषेयता वेदवाक्यानां कर्तुरस्मरणाद्वर्ण्यते

सन्त्यस्याप्यनुवक्तार इति धिग्व्यापक तम ।

तस्यैव तावदीदृश प्रज्ञास्खलित कथ वृत्तमिति सविस्मयानुकम्प नपचेत । तदपरोऽप्य- नुवक्तीति निर्दयाक्रान्तभुवन धिग् व्यापक तम । क प्राणिनो हितेप्साविप्रलब्धस्यापराध ? तथा हि । स्मरन्ति सौगता मन्त्राणा कर्तृ नष्टकादीन् । हिरण्यगर्भं च काणादा । तेषा स मिथ्या[28a]वाद इति चेत् । क इदानिमेव पौरुषेयोऽस्योऽपि ? कुमारसम्भवादिष्वात्मानमन्य वा प्रणेतारमुपदिश्य तो यदेव प्रतिव्यूहेरन् । तत्र प्रतिसहनेऽभ्युपेतबाधति चेत् । नन्विदमेवाभ्यु पगमाङ्गमिति कस्य [केन] बाधा । तत परस्यापि तुल्यमेव । तस्येष्टत्वावक्षेप इति चेत् । कुतोऽ स्यैवमिष्टिरप्रामाणिका प्रागासीत् ? अकस्माद्ग्राही चाय किं पुन क्वचित् साधनमपेक्षते, यत् पौरुषेयाऽपौरुषेयचिन्तयाऽऽत्मानमायासयति ? तत एवेष्टेरनभ्युपेतबाधया तदन्यस्यापि तुल्यमि- त्यनुपालम्भ । अनतिशयदर्शी चाय वाक्यष्वेवप्रकाराणामपौरुषेयत्वसाधनाना कार्यधर्माणां वा क्वचिदतिशयमभ्युपैतीत्यप्रत्ययैवास्य वृत्ति । दृश्यन्ते च विच्छिन्नक्रियासप्रदाया कृतकारव स्तान् यत्नवन्त उपलभन्त इति चेत् । न । नियमाभावात् । अन्यत्राऽनुपलम्भस्योपलम्भस्य वा परोपदेशादप्रत्ययादनिश्चयार्हत्वात् । स्वयं कृतानामप्यपह्नोतृदर्शनात् निष्ठागमनस्याशक्य- त्वात् ॥

यथाऽयमन्यतोऽश्रुत्वा नेमं वर्णपदक्रमम् ॥२४३॥

वक्तु समर्थ पुरुषस्तथाऽन्योऽपीति कश्चन ।

तस्यापि तदेवोत्तरम् । एवमपौरुषेयत्वेऽपि किमिदानी पौरुषेयमित्यादि ॥

तथाहि

**अन्यो वा रचितो ग्रन्थः सम्प्रदायावृते परैः ॥२४४॥**

**दृष्टः कोऽभिहितो येन सोऽप्येवं नानुमीयते ।**

न खलु किंचिदन्यदपौरुषेयत्वाश्रयोऽन्यत्रेदानीन्तनानामनुपदेशपाठाऽशक्तेः । साऽन्यत्राप्येकेन रचिते ग्रन्थेऽन्यस्य तुल्या । तदनुसारिणा सर्वस्तथाऽनुमेयः, न वा कश्चित् । तस्य तथाऽनिष्टत्वादित्यादावप्युक्तम्—इष्टेस्तदाश्रयत्वादित्यादि ॥

अपि च—

**यज्जातीयो यतः सिद्धः स तस्मादग्निकाष्ठवत् ॥२४५॥**

**अदृष्टहेतुरन्योऽप्यविशिष्टः सम्प्रतीयते ।**

नाऽदर्शनाद्धेतोरहेतुको नाम । अदृष्टहेतवोऽपि हि भावास्तदन्ये स्वभावाऽभेदमननुभवन्तस्तथाविधाः समुन्नीयन्ते । [1]हेतुभूतनिवृत्तावपि तद्रूपमनिवृत्तम् । कार्यधर्मव्यतिक्रमात् तत्स्यादिति न कश्चित्तथा वचनीयः, रूपविशेषो वा तथा दर्शनीयो य एव हेतुमनुविदध्यात् येनेष्टाऽनिष्टयोरिष्टविपर्ययो न स्यात् । स्वभावनिवृत्तेश्च हेतोरभेदतो भावानां भेदः स्यादाकस्मिक इति न क्वचिद्विनिवर्तेत । तस्माद् य स्वभावो यज्जन्मा दृष्टः सोऽन्यत्राप्यविभज्यमानः स्वात्मना तत्कार्यधर्मतां नातिवर्ततेऽग्नीन्धनवत् ॥

**तत्राप्रदर्श्य ये भेदं कार्यसामान्यदर्शनात् ॥२४६॥**

**हेतवः प्रवितन्यन्ते सर्वे ते व्यभिचारिणः ।**

यथाऽऽद्योऽपि पथिककृतोऽग्निज्वालान्तरपूर्वको नारणिनिर्मथनपूर्वकः, पथिकाग्नित्वादनन्तराग्निवदिति । कथं पुनः पथिकाग्नेर्व्यभिचारः ? ज्वालोद्भवसामर्थ्यं ह्याश्रित्य दहनस्य हेत्वन्तरं प्रतिक्षिप्यते । यदि हि विना ज्वालया स्यादन्यथापि स्यादिति । तत्र ज्वालेतरजन्मनोरबाध्यबाधकत्वे ज्वालाप्रभवत्वमन्यथाऽपि स्यादिति धर्मयोरेकत्रापि सम्भवात् । पथिकाग्निरन्यो वाऽयं एकप्रतिनियतो न स्यादित्याशङ्क्यते व्यभिचारः । सोऽयमन्योन्यव्यतिरेकी धर्मद्वयावतारो वस्तुसामान्येऽविरुद्ध इत्युच्यते नावस्थाभेदिनि विशेषे । निष्कलस्यात्मनस्तदतत्त्वविरोधात् । न च ज्वालेतरजन्मनोर्बाध्यबाधकता पथिकाग्नौ, तस्य ज्वालाव्यतिरेकेणाऽसम्भवाऽभावात् । एवंभूतः पथिकाग्निर्ज्वालाप्रभव इति स्यात्, न सर्वः, तत्र विशेषप्रतिक्षेपस्य कर्तुमशक्यत्वात्, सम्भवद्विशेषस्य च तावतस्याऽनियमात् । यदपि विना ज्वालया स्यादन्यत्रापि स्यादिति । भवत्येव, यया सामग्र्या सम्भवति, सा यदि स्यात्, अस्याः सम्भवं प्रदर्श्य तदभावं दर्शयेत् तत्र वा ज्वालाम्, [2]स्यादेतत् ।

तस्माद्नैकस्य यत्पूर्वकत्वेऽपि सर्वस्य तथाभावं साधयति । तस्यान्यथाऽसम्भवाभावात् । तथाविधस्य तु तत्क्रियाप्रतिभारहितस्य तथा स्यादिति तथाभूतमेव वाच्यं स्यात् । तदवि-

[1] हेतुरूप—क०

[2] स्यादेव—क०

दोषेण सम्भवद्विशेषमुच्यमानं छाया न पुष्णाति । कथं विशेषसम्भवो यावता तेषामपि पुरुषाणामशक्तिरेव, इदानीन्तनपुरुषवत् ? अत्रापि न शक्तिपुरुषत्वयो किंचिद्विरोधदर्शनमिति न[1] विरुद्धविधिरनुपलब्धिप्रयोगो ग[28b]मक । न ह्यतीन्द्रियेषु विरोधगतिरस्तीत्युक्तम् । न चायं पूर्वप्रयोगाद्भिद्यते ।

यदि पुरुषा अशक्ता स्युरिदानीन्तनवदिति विशेषाऽसम्भवे एतत् स्यात् । स च दुःसाध । यदेकस्याशक्तिस्तत्र [सर्व]पुरुषाणामित्यपि पूर्ववत् व्यभिचारि । भारतादिषु इदानीन्तनानामशक्तावपि कस्यचिच्छक्तिसिद्धे ।

तस्मात् कारणानि विवेचयताऽर्थेष्वपि तावत्तत्प्रतिभवेषु स्वभावभेदो दर्शनीय । तदभावे सर्वस्तदात्मा न वा कश्चित् । न चायं लौकिकवैदिकयो स्वभावभेदमुत्पश्याम । असति तस्मिंस्तयो सामान्यस्यैव दृष्टेरेकस्य कश्चिद्धर्मं विवेचयतस्तत्स्वभावमपश्यता तेनाऽऽशङ्क्य व्यभिचारवाद नियते ।

ननु वेदेतरयोरस्त्व[न्यत्व]लक्षणोऽस्त्येव विशेष । सत्यमस्ति । न केवलं तयोरेव किं तर्हि डिण्डिकपुराणेतरयोरपि । न स्वप्रक्रियामेवदीपनो नामभेद पुरुषकृतिं बाधते, अन्यत्रापि प्रसङ्गात् । यदि तादृशी रचना पुरुषा कर्तुं न शक्नुयु, कृता वाऽकृतसमेतो विवेचयेदयमस्तमपौरुषेयो वेद । ननु न शक्नुवन्त्येव पुरुषा मन्त्र[ान् कर्तु]म् । एतदुत्तरत्र विचारयिष्याम ।

अपि च न मन्त्रो नामान्यदेव किंचित् । किं तर्हि ? सत्यतप प्रभाववतां समीहितार्थसाधनं वचनम् । तदद्यत्वेऽपि पुरुषेषु दृश्यत एव, यथास्व सत्याधिष्ठानबलाद्विषदहनादिसंस्तम्भनदर्शनात्, शबराणां च केषांचिदद्यापि मन्त्रकरणात्, अवैदिकानां च बौद्धादीनां मन्त्रकल्पानां दर्शनात् । तेषां च पुरुषकृते । तत्राप्य[पौरुषेयत्वे कथम]पौरुषेयमवितथम् ? तथा हि बौद्धेतरयोर्मन्त्रकल्पयोर्हिंसामैथुनात्मदर्शनादयोऽभ्युदयहेतवोऽन्यथा च वर्ण्यन्ते । तत्कथमेकम् विरुद्धाभिधायि द्वयं सत्यं स्यात् ? तत्रार्थान्तरकल्पने तदन्यत्रापि तुल्यमित्यर्थाऽनिर्णयात् कर्मविप्रतिपत्ति । तथा च तदप्यनुपयोगमपौरुषेयम् । बौद्धादीनामपमन्त्रत्वे तदन्यत्रापि कोशपानं स्यात् कारणीयम् । विपन्नमोक्षितरे बौद्धा अपि कुर्वन्ते । तथा मन्त्रतन्त्रमपि विप्रतिषिद्धम् । मुद्रामण्डलध्यानैरप्यनक्षरै कर्माणि क्रियन्ते । न च तान्यपौरुषेयाणि नित्यानि युज्यन्ते । तेषां क्रियासमनेऽक्षररचनायां क प्रतिघात पुरुषाणाम् ? तस्मान्न किंचिदसाध्यक्रियमेषाम् ।

कथमिदानीं सत्यप्रभवौ मन्त्रकल्पौ परस्परविरोधिनौ ? न वै सर्वत्र तौ सत्यप्रभवौ । प्रभावयुक्तपुरुषप्रतिज्ञालक्षणावपि तौ स्त । स प्रभावो गतिसिद्धिविशेषाभ्यामपि स्यात् ।

यदि पौरुषेया मन्त्रा सर्वे पुरुषा किं न मन्त्रकारिण ? तत्क्रियासाधनवैकल्यात् । यदि तादृशं सत्यतप प्रभृतिभिर्युक्ता स्यु कुर्वन्त्येव ।

---

[1] नाविरु०—क०

अपि च । काव्यानि पुरुषः करोतीति सर्वः पुरुषः काव्यकृत् स्यात् । अकरणे नैव रचितवद्भदित्यपूर्वैषा वाचो युक्तिः ।

सत्यं मन्त्रक्रियासाधनविकला मन्त्रान्न कुर्वन्ति । तत्तु कस्यचित् साकल्यं न पश्यामः, पुरुषाणां समानधर्मत्वात् । उक्तमत्र—न मन्त्रो नामान्यदेव किंचित् सत्यादिमता वचन-समयादिति । तानि च क्वचित् पुरुषेषु दृश्यन्ते । सर्वपुरुषास्तद्रहिता इत्यपि तत्सम्भव-विरोधाभावादनिर्णयः । न चात्यक्षस्वभावेषु अनुपलब्धिर्निश्चयहेतुः । न च स्मृतिमति-प्रतिबोध[2]सत्यशक्तयः सर्वपुरुषभाविन्यः । तत्साधनसम्प्रदायभेदवद् गुणान्तरसाधनान्यपि स्युः । नापि सन्नपि सर्वो द्रष्टुं शक्तः । अत एवादृष्टस्यानभ्युपगमः । नापि पुरुषपूर्वितत्तो. कस्यचिद्-गुणस्य प्रतिरोद्धा, बाध्यादृष्टेर्बाध्यबाधकभावासिद्धेः ।

एतेन सर्वज्ञानप्रतिषेधादयोऽपि [1]निर्णीतोत्तराः । तत्राप्येवम्भूतो [29a] यादृशोऽयम-सम्भवन् तत्साधनसम्प्रदायो न' इति न्यायो नादृष्टज्ञापकः, अतत्स्वभाव इत्यपि, सतामपि कार्या-नारम्भसम्भवात् । स्वभावविप्रकर्षेण द्रष्टुमशक्यत्वाच्च ।

तस्मादध्ययनमध्ययनान्तरपूर्वकमध्ययनादिति भारताध्ययनेऽपि भावाद्व्यभिचारि ।

ननु वेदेन विशेषणाददोषः । कः पुनरतिशयो वेदाध्ययनस्य यदन्यथाऽध्येतुं न शक्यते ? न हि विशेषणमविरुद्धं विपक्षेणास्माद्धेतुं व्यावर्त्तयति, अविरुद्धयोरेकत्र सम्भवात् । इदानी-न्तनानामनध्ययनादिति चेत् । उक्तोत्तरमेतत् । अदर्शनादिति चेत् । इदमपि प्रतिव्यूढम् । नाप्यदर्शनमात्रमभावं गमयतीति व्यभिचार एव । तस्मान्न विशेषणमतिशयभागित्यनुपासराग्रम् ।

यत्किञ्चिद्वेदाध्ययनं सर्वं तदध्ययनान्तरपूर्वकमित्यपि व्याप्तिर्न सिध्यति । सर्वस्य तथाभावासिद्धेः । यादृशं तु यन्निमित्तं दृष्टं तत्तथेति स्यात् । दृष्टे विशेषे तन्निमित्ततया तत्त्यागेन सामान्यग्रहणं व्यभिचार्येव हुताशनसिद्धौ पाण्डुद्रव्यत्ववत् ।

एतेन वचनादयो रागादिसाधने प्रत्युक्ताः ॥

अस्तु वेदमध्ययनपूर्वकतासाधनम् ।

सर्वथाऽनादिता सिध्येदेव नाऽपुरुषाश्रयः ॥२४७॥

तस्मादपौरुषेयत्वे स्यादन्योऽप्यनराश्रयः ।

पुरुषा एव हि स्वयमभ्यूह्य परतो वाऽधीयते । नैषामव्यापृतकरणानां स्वयं शब्दा ध्वनन्ति,[3] येनाऽपौरुषेयाः स्युः । अपि स्युरपौरुषेया यदि पुरुषाणामादिः स्यात् । तदाऽप्यन्य-पूर्वकत्वं न सिध्यति, अध्यापयितुरभावात्[4] । तत् प्रथमोऽध्येता कर्त्तैव स्यात् । तदयमनादिः पूर्वपूर्वदर्शनप्रवृत्तो डिम्भकपांशुक्रीडादिवत् पुरुषव्यवहार इति स्यात् नाऽपौरुषेय एव ॥

[1] निर्वापिनो० क०

[2] प्रतिषेध क०

[3] ध्वनयन्ति—क०

[4] एतत्पर्यन्तं भिक्षुणीमाषाणोनुदितम् श्रोताइत्यादनेन स्वसम्पादितवृत्तौ ।

अनादित्वादपौरुषेयत्वे बहुतरमिदानीमपौरुषेयम् । तथा च—

म्लेच्छादिव्यवहाराणा नास्तिक्यवचसामपि ॥२४८॥
अनादित्वात्तथाभाव. पूर्वसंस्कारसन्तते. ।

म्लेच्छव्यवहारा अपि केचिन्मातृविवाहादयो मदनोत्सवादयश्चानादय. नास्तिकवचांसि चाऽपूर्वपरलोकाद्यपवादीनि । न हि तान्यनाहितसंस्कारा परं प्रवर्तयन्ति । स्वप्रतिभारचितसमयानामपि यथाश्रुतार्थविकल्पसंहारेणैव प्रवृत्तेस्तत् किंचित् कुतश्चिदागतमित्येषस्योपदेष्टु प्रबन्धेनाभावाद् अपरपूर्वकमित्युच्यते प्रागेव यथादर्शनप्रवृत्तय सम्यग्मिथ्याप्रवृत्तयो लोकव्यवहारा ।

नन्वाविकल्पिकेष्वदृष्टा एव व्यवहारा पश्चात् प्रवृत्ता दृश्यन्ते । न । तेषामप्यन्यसंस्काराहितानां यथाप्रत्ययं प्रबोधात् ॥

भवतु सर्वेषामपौरुषेयत्वमिति चेत् ।

तादृशेऽपौरुषेयत्वे क सिद्धेऽपि गुणो भवेत् ॥२४९॥

काममविसंवादकमित्यपौरुषेयत्वमिष्टम् । तद्विसंवादकानामपि केषाचिदनादितयास्तीति किमपौरुषेयत्वेन ?

सति वा वेदवाक्यानामपौरुषेयत्वे

अर्थसंस्कारभेदाना दर्शनात् संशय पुन ।

यद्यपौरुषेयत्वेऽपि प्रतिनियतामेव तदर्थप्रतिभा जनयेदाश्वासन स्यात् । यथेष्ट तु समारोपापवादाभ्या नैरुक्तमीमासकादयो वेदवाक्यानि विभजन्तो दृश्यन्ते । न च तेऽर्थास्तेषा न संघटन्ते । समयप्राधान्यादर्थनिवेशस्यैकस्यापि वाक्यस्यानेकविकल्पसंभवात् । प्रकृतिप्रत्ययानामनेकार्थपाठात् । रूढेरप्येकान्तेनाननुमते, अप्रसिद्धशब्दबाहुल्याच्च, तदर्थस्य पुरुषोपदेशापेक्षणात्, तदुपदेशस्य तदिच्छावृत्तेरनिर्णय एव वेदवाक्यार्थेषु ॥

अपि चायमपौरुषेयत्व साधयन् वर्णाना वा साधयेद्वाक्याना वा ? तत्र—

अन्याऽविशेषाद्वर्णाना साधने कि फल भवेत् ॥२५०॥

न हि लोकवेदयोर्नाना वर्णा । भेदेऽपि च प्रत्यभिज्ञाना[29b]विशेषात् तत एवत्वासिद्धिप्रसङ्गात् । भेदानुपलक्षणाच्च वैदिकवर्णासिद्धि । प्रत्यभिज्ञानादप्रतिपत्तिप्रसङ्गात्, अनभ्युपगमाच्च । तेषा चापौरुषेयत्वप्रसाधने ते तुल्या सर्वत्रेति किमनेन परिशोधितम् । तथा च सर्वो व्यवहारोऽपौरुषेयो न च सर्वोऽवितथ इति व्यर्थ परिश्रम ॥

अथ वाक्यमपौरुषेयमिष्टम् ।

वाक्य न भिन्न वर्णेभ्यो विद्यतेऽनुपलम्भनात् ।

न हि वयं देवदत्तादिपदवाक्येषु दकारादिप्रतिभासं [मुक्त्वाऽन्यं प्रतिभासं] बुद्धेः पश्यामो द्वितीयवर्णप्रतिभासवत्। न चाप्रतिभासमानं ग्रहणे ग्राह्यतयेष्टमस्त्यन्यद्वेति शक्यमवसातुम्, आकारान्तरवत्। अन्याऽसंभवि कार्यं गमकमिति चेत्। स्यादेतद्यदि तेषु वर्णेषु सत्स्वपि तत्कार्यं न स्यात्। न भवति, तेषामविशेषेऽपि पदवाक्यान्तरेष्वभावादिति चेत्। न। तेषामविशेषासिद्धेः। अविशेषः प्रत्यभिज्ञानात् सिद्ध इति चेत्। न। तस्य व्यभिचारात्, अनिदर्शनत्वाच्च। वर्णाऽविशेषेऽपि वाक्यभेदात् प्रतिपत्तिभेदः कार्यभेदः स्यात्। सा च वाक्यात्। तच्चातीन्द्रियमिति कुतः स्यात्? सन्निधानमात्रेण जननेऽव्युत्पन्नस्याऽपि स्यात्।

तस्माद्वाक्यं न नाम किंचिदर्थान्तरं वर्णेभ्यो यस्याऽपौरुषेयत्वं साध्येत। तदभावाद्वेदाऽविशिष्टवर्णाऽपौरुषेयत्वमपि प्रथमपक्षे प्रत्युक्तम् ॥

अपि च—अस्तु नामार्थान्तरं वाक्यम्। तदनेकावयवात्मकं वा स्यादनवयवं वा?

अनेकावयवात्मत्वे पृथक्तेषां निरर्थता ॥२५१॥

तेऽपि तस्य बहवोऽवयवाः पृथक् प्रकृत्या यद्यनर्थकाः।

अतद्रूपे च तद्रूप्यं कल्पितं सिंहतादिवत्।

अर्थवानेकात्मा वाक्यम्। ते चावयवाः स्वयमनर्थकाः। तेषु स आत्मा कल्पनासमारोपितः स्यात् सिंहतादिवत् माणवकादिष्विति पौरुषेय एव ॥

अथ मा भूदेष दोष इति प्रत्येकं तेऽवयवाः सार्थका इष्यन्ते।

प्रत्येकं सार्थकत्वेऽपि मिथ्याऽनेकत्वकल्पना ॥२५२॥

एकावयवगत्या च वाक्यार्थप्रतिपद्भवेत्।

परिसमाप्तार्थं हि शब्दरूपं वाक्यम्। ते चावयवाः तथाविधाः पृथक् पृथगिति प्रत्येकं ते वाक्यम्। तथा च नानेकावयवं वाक्यम्। एकावयवप्रतिपत्त्या च वाक्यार्थप्रतिपत्तेरवयवान्तरापेक्षा कालक्षेपश्च न स्यात्। तस्य निष्कलात्मनः क्षणेन प्रतिपत्तेरेकज्ञानोत्पत्तौ निर्दोषावगमात्। अन्यथा नैकत्वविरोधात् ॥

सकृच्छ्रुतौ च सर्वेषां कालभेदो न युज्यते ॥२५३॥

मा भूदवयवान्तराप्रतीक्षणेनैकस्मादेवावयवाद्वाक्यार्थसिद्धेरनेकावयवत्वहानिर्यायस्येति सकृत् सर्वावयवानां श्रवणमिष्यते। तदापि कालक्षेपो न पुनः एव, एकावयवप्रतिपत्तिकाल एव सर्वेषां श्रवणात्। क्रमश्रवणे च पृथगर्थवतामेकस्मादेव तदर्थसिद्धेरन्यस्य वैयर्थ्यात्। सहश्रुतौ च पृथगर्थेष्वदृष्टसामर्थ्यानामर्थवत्ता च न सिध्यति। सहितेष्वर्थदर्शनाददोष इति चेत्। न। पृथगसतो रूपस्य संधानेऽप्यसंभवात्, अर्थान्तरानुत्पत्तेश्च। शब्दोत्पत्तिवादिनस्तावदयमदोष एव, पृथगसमर्थानामप्यवयवानामुपकारविशेषादर्थवत्ता कार्यविशेषोपयोगात्।
प्रत्येकं त्ववयवेषु समर्थेषु व्यर्था स्यादन्यकल्पना ॥

अथ पुनरेकमेवानवयवं वाक्यम् । तत्र

एकत्वेऽपि ह्यभिन्नस्य क्रमशो गत्यसम्भवात् ।

कालभेद एव न युज्यते । न ह्येकस्य क्रमेण प्रतिपत्तिर्युक्ता गृहीताऽगृहीतयोरभेदात्, गृहीतागृहीताभावात् । क्रमेण च वाक्यप्रतिपत्तिर्दृष्टा, सर्ववाक्यव्याहारश्रवणस्मरणकालस्या नेकक्षणनिमेषानुक्रमपरिसमाप्तेः । वर्णरूपाऽसंस्पर्शिनश्च शब्दात्मनोऽप्रतिभासनात्, वर्णानु क्रमप्रतीतेः । तदविशेषेऽप्यनुक्रमकृतत्वाद्वाक्यभेदस्यानुक्रमवती वाक्यप्रतीतिः । वर्णानु [30a]क्रमोपकारानपेक्षणे तैरेवा कथंचित् प्रयुक्तैरपि यत् किंचिद्वाक्यं प्रतीयेत, विना वा वर्णैस्तैरनुक्रमवद्भिरक्रमस्योपकारायोगाद्, अक्रमेण च व्याहर्तुमशक्यत्वात्, गत्यन्तराभावाच्च नैव वाक्ये वर्णाः सन्ति ।

तदेकमेव शब्दरूपं व्यञ्जकानुक्रमवशादनुक्रमवद्वर्णविभागवच्च प्रतिभातीति चेत् । अनुक्रमवता व्यञ्जकेनाक्रमस्य व्यक्तिः प्रत्युक्ता, व्यक्ताव्यक्तविरोधात् । अवर्णभागे च वाक्येऽसकलश्राविणोऽसकलवाक्यगतिर्न स्यादेकस्य स(क)लाभावात् । सकलश्रुतिर्न वा कस्यचित् ।

समस्तवर्णसंस्कारवत्याऽन्त्यया बुद्ध्या वाक्यावधारणमित्यपि मिथ्या, तस्यावर्णरूप तास्पर्शिनः कस्यचित् कदाचिदप्रतिपत्तेः, वर्णानां चाक्रमेणाप्रतिपत्तेः कुतोऽक्रममेकबुद्धिग्राह्यं वाक्यं नाम ? न चान्त्यवर्णप्रतिपत्तेरूर्ध्वमन्य[म]स(श)कलं शब्दात्मानमुपलक्षयामः ।

[1]नापि स्वयमप्ययं यतो विभावयति । केवलम् एव यदि स्यात् साधु मे स्यादिति' कल्याणकामतो मूढमतिरन्यायाद्वादी समाप्तकल्पं शब्दो भातीति स्वप्नायते । न हि स्मर्य माणयोरपि पदवाक्ययोर्वर्णाः क्रमनियममन्तरेण विभाव्यन्ते । अक्रमायां बुद्धौ पौर्वापर्याऽभा- वात् तेषां तत्कृतः पदवाक्यभेदानां भेदो न स्यात् ॥

नाप्यवर्णक्रममन्यत् शब्दरूपं पश्यामः इत्युक्तम् । सति वा तन्नित्यं वा स्यादनित्यं वा ? यदि—

अनित्यं यत्नसंभूतं पौरुषेयं कथं न तत् ॥२५४॥

अवश्यं ह्यनित्यमुत्पत्तिमत् कुतश्चिद् भवति । तथा ह्याकस्मिकत्वे सत्यस्य देशादिनियमो न स्यादित्युक्तम् । तच्च यत्नप्रेरिताऽविगुणकरणानां दृष्टं यथा नान्ति कारणधर्मदर्शनात् पुरुषव्यापार एव कारणम् । अतः पौरुषेयं स्यात् ॥

नित्योपलब्धिर्नित्यत्वेऽप्यनावरणसंभवात् ।

अथ तच्छब्दरूपं नित्यं स्यादुपलभ्यस्वभावं च । स तस्य स्वभावः कदाचिन्नापैतीति

[1] इतः तिब्बतीभाषातोऽनूदितं श्रीसांकृत्यायनेन स्वसम्पादितवृत्तौ ।

नित्यमुपलभ्येत । एवं हि स नित्यः स्यात् यदि न कुतश्चिदपि सामर्थ्यात् प्रच्यवेत् । ज्ञान-
जननसामर्थ्यस्य तदात्मकत्वात् । अर्थान्तरस्य च प्रागेव निषिद्धत्वात् ।

नापि तस्योपलभ्यात्मनः किंचिदुपलम्भावरणं सम्भवति । तस्य सतोऽपि तदात्मानमखण्ड-
यन् सामर्थ्या(र्थ्यं)तिरस्कारायोगात् । न हि तत्रातिशयमनुत्पादयन् किंचित्करो नाम ।
अकिंचित्करश्च कः कस्यावरणमन्यद्वेति निर्लोठितप्रायमेतत् ।

कुड्यादयो घटादीनां यमतिशयमुत्पादयन्ति, खण्डयन्ति वा येनावरणमिष्यन्ते ? न ब्रूमस्ते
किंचिदतिशाययन्ति । अपि तु न सर्वे घटक्षणाः सर्वस्येन्द्रियविज्ञानहेतवः । परस्परसहिता-
स्तु विषयेन्द्रियाऽऽलोकाः परस्परतो विशिष्टक्षणान्तरोत्पादात् विज्ञानहेतवः, अनुपकार्यस्याऽपेक्षाऽ-
योगात् । अजनस्वभावस्य नित्यं जननमजननं वाऽन्यस्य सर्वदा स्यादित्युक्तम् । ते चान्यो-
न्यसहिताः प्रतिघातिनाऽन्येनान्योन्यस्योपकारिणः, अव्यवधानदेशयोग्यतासहकारित्वात् तेषामन्यो-
न्यातिशयोत्पत्तेः । व्यवधाने हेत्वभावात् समर्थक्षणान्तरानुत्पत्तेर्ज्ञानानुत्पत्तिः । तस्मात्
पूर्वोत्पन्नसमर्थनिरोधात्, सति [च] कुड्येऽन्यस्योत्पत्तौ कारणाभावेनाऽनुत्पत्तेः कारणवैकल्यात्
ज्ञानानुत्पत्तिरिति कुड्यादय आवरणमुच्यन्ते । न [पुनः] प्राप्योग्यस्य प्रतिबन्धात्, तस्य
स्वभावादप्रच्युतेः ।

अथवा सम्भवत्यपि भावानां क्षणिकानामन्योन्योपकारः, अनित्यत्वाद्धेतुप्रत्ययसामर्थ्य-
स्याऽन्वयंविदा । तेन यदिन्द्रियविषयमध्यस्थितमावरणं [तत्] तौ विज्ञानोत्पत्तिवैगुण्यतारतम्य-
भेदेनातिशाययेदपि, आवरणभेदेन शब्दादौ श्रुतिमान्द्यपाटवदर्शनात् । अन्यथा क्वचिदप्य-
किंचित्करस्य सन्निधानस्याप्यसन्निधानतुल्यत्वात्तस्येदमित्युपसंहारो विकल्पनिर्मित एव स्यात्,
[30b]न वस्त्वाश्रयः । न च समारोपाऽनुविधायिन्योऽर्थक्रियाः । न हि माणवको दहनोप-
कारादाधीयते पाके । तस्मात् सत्यामपि [1]विकल्पनायामतत्परावृत्तयो भावा यथा-
स्वभाववृत्तय एव स्युः । तत् सत्यप्यावरणे नापेयुरेनेन्द्रियादयः । न च[2] तथा । तस्मात्
तैनाऽपेयविशेषा इति गम्यन्ते । न त्वेव नित्यानां शब्दानां कश्चित् सत्यतिशयहानि-
प्रत्युत्पत्तिर्वा । तद्यदि तेषां ज्ञानजननं स्वभावः, सर्वस्य सर्वदा सर्वविषयाणि ज्ञानानि सकृज्ज-
नयेयुः । नो चेन्न कदाचित् कस्यचित् किंचिदित्येकान्त एव ॥

अश्रुतिर्विकलत्वाच्चेत् कस्यचित् सहकारिणः ॥२५५॥

स्यादेतत्—नावरणादित्य सर्वे शब्दा न श्रूयन्तेऽपि तु किंचित्तेषां [illegible] सहकारि
प्रतिनियतमस्ति । तत् कदाचिद्भवतीति सत्स्वप्येषां कदाचित् कस्यचिच्छ्रवणमिति ॥

काममन्यप्रतीक्षास्तु नियमस्तु विरुध्यते ।

न वै सर्वं कारणानां सहकारीणि प्रतिनियमः । किं स्योऽन्त एव कारणानि तदन्यस्यो-
पकारिणम्, सतोऽप्यतस्मादनियमस्य कार्योत्पत्तेरयोगात् । तथा शब्दोऽपि यदि किंचिदेव कार्यं

---

¹ भवि कल्प० क०     ² न चैव—क०

कुर्यात्, करोतु । पूर्वस्वभावनियत इत्येतन्न स्यात्, तस्य प्रच्युते, अपेक्षाच्च स्वभावान्तरप्रतिलम्भात् । न ह्यनुपकार्यपेक्ष्यते इत्युक्तमेतत् । तदुपकारस्य चार्थान्तरत्वे तस्येति सम्बन्धाऽभावादयोग्युक्ता । तस्य चाज्ञेयत्व उपकारादेव ज्ञानोत्पत्ते ।

तस्मादेष शब्दो नन्द्रिय न सन्निकर्ष नात्मानमन्यद्वा किंचित् ज्ञानोत्पत्तिसमाश्रय स्वज्ञानजननेऽपेक्षते, सर्वस्य तत्राऽकिंचित्करत्वात् ॥

अपि चैते शब्दा व्यापिनो वा स्युरव्यापिनो वा ?

**सर्वत्रानुपलम्भ स्यात्तेषामव्यापिता यदि ॥२५६॥**

कथमेकदेशवर्तिन तच्छून्यदेशस्थित उपलभेत ? अप्राप्तग्रहणपक्षेऽदोष इति चेत् । न । तत्रापि योग्यदेशस्थितितारतम्यापेक्षणादयस्कान्तादिवत् । अन्यथा स्पष्टाऽस्पष्टश्रुतिभेदो न स्यात् । सति चोपलम्भप्रत्यये सर्वत्र देशे तुल्यमुपलभ्येरन् । तस्मान्नाऽव्यापिन ॥

**सर्वेषामुपलम्भ स्याद्युगपद्व्यापिता यदि ।**

न हि कश्चिच्छब्द सर्वविषयास्तीति सर्वे युगपदुपलभ(भ्ये)रन् । सर्वदेशस्थितेश्च योग्येन्द्रियत्वाद्विषयसन्निधानादप्रतिबन्धाच्च ॥

**संस्कृतस्योपलम्भे च क [1]संस्कर्ताऽविकारिण ॥२५७॥**

स्यादेतत्—सन्नपि न सर्व शब्द उपलभ्यते सर्वेण, संस्कृतस्य संस्कृतेनैवोपलम्भादिति । तन्न संस्कृतस्योपलम्भोऽनाधेयविकारस्य संस्कारायोगात् ।

**इन्द्रिये [2] स्याद्धि संस्कार शृणुयान्निखिल च तत् ।**

तत्र यदि संस्कृतेनोपलम्भ इत्यसंस्कृतेन्द्रियो नोपलभेत । यस्य संस्कार इन्द्रियस्य कृत स सर्वशब्दान् युगपत शृणुयादिति प्रसङ्गोऽनिवृत्त एव ।

**संस्कारभेदा[3]द्भिन्नत्वादेकार्थनियमो यदि ॥२५८॥**
**अनेकशब्दसंघाते श्रुति कलकले कथम् ।**

अथापि स्यात्—प्रतिनियता संस्कारा शब्दानाम् । तत्र केनचित् संस्कृतमिन्द्रिय कस्यचिदेव ग्राहकमिति न युगपत् सर्वशब्दश्रुतिरिति । संस्कारविशेषात् श्रुतिनियमे इन्द्रियाणामनेकशब्दसंघातस्य कलकलस्य श्रुतिर्न स्यात् । न ह्येक शब्द कलकलो नाम भिन्नस्वभावानां युगपच्छ्रवणात् । स्वभावभेदाश्रयत्वाच्च भेदव्यवस्थिते । लघुवृत्ते सकृच्छ्रुतिभ्रान्तिरिति चेत् । वर्णादिस्वरधारया गमकावयवोपसंहारात् संकुला प्रतिपत्ति स्यात् । वक्ष्यते चात्र प्रतिषेध । तस्मादेकगति[4]शक्तिप्रतिनियमादिन्द्रियस्याऽनेकात्मा कलकलो न श्रूयेत (त) ।

---

[1] संस्कर्ता विका० क०
[2] इन्द्रियस्य तु संस्कार —क०
[3] भेदभिन्न—क०
[4] गती—क०

ध्वनयः केवलं तत्र श्रूयन्ते चेन्न वाचकाः ॥२५९॥

न वै कलकले वर्णपदवाक्यानि श्रूयन्ते । ध्वनीनामेव केवलानां श्रवणात् । वाचके च प्रतिनियतशक्तीन्द्रियं न ध्वनिषु । तत्र

ध्व[31a]निभ्यो भिन्नमस्तीति श्रद्धेयमि(म)तिविह्वलम् ।

न हि वयं ध्वनिं शब्दं [च] वाचकं पृथग्रूपमुपलक्षयामः । एकमेवैकदा वर्णानुक्रमश्रवणे शब्दात्मानं व्यवस्यामः । तत् कथं व्यवसायपूर्वकं व्यवहारमध्यवस्यन्तः प्रवर्तयामः । तस्माद् ध्वनिविशेष एवायं वर्णाद्याख्यः ॥

अपि च

स्थितेष्वन्येषु शब्देषु श्रूयते वाचकः कथम् ॥२६०॥

[न] ध्वनिरतो भिन्नरूपस्तेन सह पृथग्वा । न हि प्रत्यक्षेऽर्थे परोपदेशो गरीयान् । तदयं स्थितेष्वन्येषु व्याहर्तृषु केवलमेव शब्दं शृण्वंस्तदुपलम्भप्रत्ययानां तदन्यनिष्पादने सामर्थ्याभावं प्रत्येति यदि समर्थाः स्युस्तत्साधितं तदुपलभ्येत ।

तत्स्वभावा एव प्रत्ययाः कथं कलकलेऽर्थान्तरमारभेरन् । न हि कारणाभेदे कार्यभेदो युक्तः, भेदस्याहेतुकत्वप्रसङ्गादित्युक्तम् । न च कलकले वाचका न श्रूयन्ते, पदवाक्यविच्छेदानामुपलक्षणात् ॥

कथं वा शक्तिनियमाच्छ्रुतध्वनिगतिर्भवेत् ?

तानि प्रतिनियतशक्तीन्यपीन्द्रियाणि नानारूपान् प्रतिशब्दनियतान् ध्वनीन् शृण्वन्ति, न त्वेव शब्दानिति कः शब्देष्वेषां निर्बन्धः ?

यदुक्तम्—न ध्वनयो भेदेन वाचकेभ्यः सिद्धा इति । कथं न सिद्धाः ? वचनादर्थप्रतिपत्तेः । न हि ध्वनिभागादल्पीयसी(सः) प्रतीतिः । न च सोऽन्यः समेति । तदियं समस्तपदवाक्यरूपसाध्यार्थप्रतीतिरसमस्तभागेषु ध्वनिषु न सम्भवतीति सिद्धमक्रमस्य शब्दरूपं क्रमवद्भागस्य ध्वनेरिति ।

तन्न । अक्रमस्य क्रमवद्वर्णध्वनिरेकेण प्रागेव निषिद्धत्वात् । अतिप्रसङ्गश्चैवम्—वर्णभागानां पूर्वेणापरस्याप्रतिसन्धानात् एकभागाच्चाप्रतिपत्तेस्तद्व्यतिरेकी हस्तमशकादिषु प्रतिपत्तिहेतुः समस्तरूपः कर्मातिभागमभ्युपगम्यः स्यात् शब्दवदेव । क्रमभाविन एव तु यथास्वं करणप्रयोगात् भिन्ना वर्णभागाः, वर्णभागा वा क्रमेण विकल्पविषया यथासङ्केतमर्थप्रतीतिं जनयन्तीति न्याय्यम् ॥

किं च—

ध्वनयः सम्भवा यस्ते शेषं, वर्ण्यवाचकाः ॥२६१॥

ध्वनिभिर्व्यज्यमानेऽस्मिन् वाचकेऽपि कथं न ते ।

क्रमोत्पादिभिर्ध्वनिभागैर्व्यज्यन्ते किल वाचका वर्णाः । तथापि ते नैव सकृत् प्रत्याययन्ति, क्रमभावात् । नाप्येक एव भागः, तदन्यवैयर्थ्यप्रसङ्गात्, एकवर्णभागकाले च समस्तरूपानुपलक्षणात् । तदयमप्रतिसंहितसकलोपलम्भः ध्वनिवदुपलम्भसाकल्यमनिधाय साध्यमर्थं कथं साधयेत् ? को हि विशेषोऽत्यन्तानुपलम्भे सदसदतोरुपलम्भसाकल्यवर्णेषु ? न च संनिधानमात्रेण साधनं, व्यक्त्यपेक्षणात् । सा चेयं क्रमभाविनी सदसतोस्तुल्येति योगाभिध्वनिभिरशक्यसाधनं नार्थं तथापि तथैवमलमन्येन । तस्मान्न वर्णेषु [नापि] वाक्येऽपौरुषेयता ॥

वर्णानुपूर्वी वाक्यं चेत् न वर्णानामभेदतः ॥२६२॥

नार्थान्तरमेव शब्दरूपं वाक्यमपौरुषेयम् । किं तर्हि ? वर्णानुक्रमलक्षणं हि नो वाक्यम् । तदपौरुषेयं साध्यमिति चेत् । न । वर्णानामानुपूर्व्या अभेदात् । नेयमर्थान्तरं वर्णेभ्यः, दृश्याया विभागेनोपलम्भप्रसङ्गात् । अदृश्याया ततोऽप्रतिपत्तेः,[१] लिङ्गाभावात् । भेदवत्याश्चानुपूर्व्या अभावे वर्णमात्रमविशिष्टं सर्वमिति पूर्ववत् प्रसङ्गः ।

तेषां च न व्यवस्थानं क्रमान्तरविरोधतः ।

यत्कृतकानुपूर्वी वर्णानाम्, ते च न बहवः समानजातीया येन केचिद् व्यवस्थितक्रमाः स्युः, अन्ये यथेष्टपरावृत्तयः । किं तर्हि ? एक एव त्रैलोक्ये ककारस्तथा गकारः । तदाग्निरिव स्यात् गगनमिति, ककारगकारयोः पूर्वापरभावस्य अव्यवस्थितत्वात् । क्षणिकानामपि हेतुपरिणामनियमवतामशक्यः क्रमविपर्ययः कर्तुं यथा बीजाङ्कुरपत्रादीनाम्, ऋतुसंवत्सरादीनां च । किं पुनरचलिताऽवस्थास्वभावानामकृतकानां कथञ्चित् स्थितानाम्, पूर्वावस्थात्यागमन्तरेणान्यथाभावायोगात् । त्यागे वा विनाशप्रसङ्गात् । विशेषेण नित्यायामानुपूर्व्याम् । [31b]नवैतत् प्रतिपदं वर्णान्यत्वेऽपूर्वोत्पादात्, वर्णबाहुल्याद्वा स्यात् । तच्चानभिमतम् ॥

अपि च—

देशकालक्रमाभावो व्याप्तिनित्यत्ववर्णनात् ॥२६३॥

सा चेयमानुपूर्वी वर्णानां देशकृता वा स्याद्यथा पिपीलिकानां पङ्क्तौ, कालकृता वा यथा बीजाङ्कुरादीनाम् । सा द्विविधापि वर्णेषु न सम्भवति, व्याप्तेर्नित्यत्वाच्च । अन्योन्यदेशपरिहारेण वृत्तिर्हि देशपौर्वापर्यम् । तत्सर्वस्य सर्वेण तुल्यदेशत्वाद्वर्णेषु न सम्भवति, घातातपवदाकाशादिवच्च । तथा कालपरिहारेण वृत्तिः कालपौर्वापर्यम् । यदैको नास्ति तदान्यस्य भावात् । तदपि नित्येषु न सम्भवति । सर्वदा सर्वस्य भावात् । न चान्या गतिरस्ति । ततश्च वर्णपौर्वापर्यं वाक्यं यदपौरुषेयं साध्येत ॥

अनित्यताऽव्यापितायां च दोषः प्रागेव कीर्तितः ।

---

[१] ततोऽर्थाप्रतिपत्तिप्रसङ्गात्—क०

अथ मा भूदयं दोष इत्यनित्यान्, अव्यापिनश्च वर्णानिच्छेत् । तावपि पक्षौ प्रागेव निराकृतावित्यपरिहारः ॥

व्यक्तिक्रमोऽपि वाक्यं न नित्यव्यक्तिनिराकृतेः ॥२६४॥

न वर्णानां रूपानुपूर्वी वाक्यम् । किं तर्हि ? तद्व्यक्तिः । सा यथास्वं वर्णाभिव्यक्तिप्रत्ययस्माद्भवन्ती क्रमयोगिनीति तदानुपूर्वी वाक्यमित्यपि मिथ्या, तस्या नित्येषु प्रागेव निषिद्धत्वात् । कार्यताविशेष एव साक्षाच्छब्दोपधानेना(न) ज्ञानजन¹[नसामर्थ्य]ता व्यक्तिरित्याख्यानमेतत् ।

व्यापारादेव तत्सिद्धेः करणानां च कार्यता ।

²[यत् खलु रूपं यत एवोपलभ्यते, तस्य तदुपलब्धिनान्तरीयकामुपलब्धिमेवाश्रित्य लोकः कार्यतां प्रज्ञापयति । सा वर्णेऽप्यस्ति । सैव चान्यत्रापि । तदाश्रयो न विशेषः । तत् कथं तुल्येऽभ्युपगमनिबन्धने न वर्णाः कार्याः ?

न चैतदुपलब्ध्याश्रया कार्यतास्थितिः । किन्तर्हि ? यत्सत्येव भवतीति सत्ताश्रया । सा सत्ता कुतः सिद्धा, येन कार्यतां साधयेत् ? न ह्यसिद्धायामस्यामेव भवतीति । तस्मात् सत्तासिद्धिस्तत्साधनी । सा चोपलब्धिरेव ।

स्वयमेव यदि तस्य प्राङ् न सत्ता सिद्धा स्यात् । सा हि सत्तासिद्धिः कार्यासिद्धिपूर्विका । ननु तद्रूपमसिद्धमेव यत् तथाभूतविज्ञानाव्यवधानोपयोगि । सिद्धमेव तदर्थसत्त्वान्नोपयुक्तमिति चेत् । कथमिदानीमुपयुक्तानुपयुक्तयोरभेदः ? नापि भेदः प्रागस्वभावात्मस्पर्शी, तस्यैवातिशयस्योपयोगसिद्धेस्तस्याकारणत्वप्रसङ्गात् । यस्यैव भावे तात्त्वसिद्धिः तदेव हि तत्रोपयोगि युक्तम् । तदतिशयोपयोगेऽप्यस्य तद्वत्प्रसङ्गः ।

तस्मादतिशेते एवाऽव्यवहितसामर्थ्योपयोगोऽन्यथाभेदस्ततस्त्वन्यम् । ³[अनतिशयस्यापेक्षा] प्रागेव निरस्ता ।

स च करणव्यापारादेव सिद्ध इति सर्वकार्यतुल्यधर्मा । तस्य तादृशस्य व्यक्तौ सर्वं व्यक्तम्, न वा किञ्चिदपि, अविशेषात् ॥

तथाहि—

स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ॥२६५॥

---

¹ एतत् पर्यन्तं तिब्बतीभाषातोऽनूदितं श्रीसांकृत्यायनेन स्ववृत्तिवृत्तौ

² मूले [ ] कोष्ठकान्तर्गतं पृ० ९३ पं० ८ पर्यन्तं नास्ति । श्रीसांकृत्यायनमन्या-तिवृत्तितो मुद्रितमत्र ।

³ अत्र मुद्रिते 'विशेषस्याप्रोपयुक्तमिति चेत् प्रागेव निषिद्धा' इत्येव पाठोऽस्ति । विस्तरस्तु म० वृत्त्यनुसारी स्वीकृतः ।

यथा दीपोऽन्यथा वापि को विशेषोऽस्य कारकात् ।

स्वप्रतिपत्तिद्वारेणान्यप्रतिपत्तिहेतुर्लोके व्यञ्जकः सिद्धो दीपादिवत् । चेत् प्राक् सिद्ध स्यात् । समानजातीयोपादानलक्षणसिद्धेन तस्यैवातिशयस्य ज्ञानहेतौ, तस्य तत्सामग्री-प्रत्ययत्वात् ।

ये पुनरसिद्धोपलम्भका कारका एव, कुलालादिवत् घटादौ ।

प्रत्यभिज्ञानादयोऽपि सिद्धिहेतवो न हेतुलक्षणम् पुष्णन्ति ।

यदपि किञ्चिदुत्तरा अकारप्रतीति 'अ'प्रतीते पूर्वाऽभिन्नविषया तद्वदित्यादि, तदपि न स्वलक्षणयोरभेदसाधने समर्थम्, तत्स्वभावाऽसिद्धे ।

सामान्येन वचने भिन्नविषयत्वस्याप्यविरोध । एकविषययोश्च प्रतीत्यो पूर्वापरभावाऽयोगात् । सन्निहितासन्निहितकारणत्वेनोत्पादानुत्पादात् । सन्निधानेऽप्यनुत्पन्नस्यातत्कारणत्वात् तयोर्भिन्नाखिलकारणत्वम् । तदेकाभेदेऽपि शक्तस्याप्रतीक्षणात् युक्तिविरुद्ध पूर्वापरयो प्रतीत्योरेकविषयत्वम् । प्रतीतिप्रतिभासस्वभावभेदेऽपि नामसाम्यादेकविषयत्वमप्ययुक्तम्, घटादिष्वपि प्रसङ्गात् । तत्र दृष्टविरोधादसाधनत्वमिति चेत् । इहापि विरोधाभाव केन सिद्ध ? यावत् तथाभिधेयतार्थाभेदेन व्याप्तौ न साध्यते तावत् सन्दिग्धो व्यतिरेक । प्रतिकरणभेद च भिन्नस्वभाव शब्द श्रुतौ निविशमानो यदैक साध्यते किन्न घटादय ? तत्रापि कथमेव व्यञ्जकभेदात् प्रतिभासभेद इति प्रत्यवस्थातुम् ।।

करणानां समग्राणां व्यापारादुपलब्धित ।।२६६।।

नियमेन च कार्यत्वं व्यञ्जके तदसम्भवात् ।

न हि कदाचिदव्यापृतेषु करणेषु शब्दानुपलब्धि । न चावश्य व्यञ्जकव्यापारोऽर्थमुपलम्भयति, क्वचित् प्रकाशेऽपि घटाद्यनुपलब्धे ।

सेय नियमेनोपलब्धिस्तद्व्यापाराच्छब्दस्य तदुद्भवे स्याद् । अवर्तुर्व्यापारेऽपि तदसिद्धप्रयोगात् व्यापिनित्यत्वादुपलम्भ इति चेत् । क इदानी घटादिषु समाश्वास ? तेषां तथाऽनिष्टेरिति चेत् । शब्द किंविशिष्ट तत्समानधर्मा । न चास्य कश्चिदतिशय इत्युक्तम् । प्रतिषिद्धे च व्यापिनित्यते ।

घटादीना व्यञ्जकान्तरसम्भवाददोष । प्रकाशो ह्येषां व्यञ्जक सिद्ध । मृत्कुलालादीना व्यञ्जकत्वे तादृशा एव स्फुरन्ति अविशेषेण ते च ततो व्यञ्जकानियमात् कारका एव उपकारकस्य गत्यन्तराभावात् ।

तदेतत् शब्देष्वपि तुल्यम् । तत्रापीन्द्रिययोग्यदेशनादिभ्य करणानामतिशयात् घटादिकारकधर्मस्य च करणेषु दृष्टे । तस्यैव प्रदीपादेर्विषयान्तरस्य च कस्यचित् व्यञ्जकान्तराभावात् । तत्कारणानि तेषां व्यञ्जकानि स्यु । तस्मान्न व्यक्ति शब्दस्य । भवन्ती वा

करणेभ्योऽतिशयवत्ता वा शब्दस्य व्यक्तिः, आवरणविगमः, विज्ञानं वा, गत्यन्तराभावात् । तत्र नातिशयोत्पत्तिरनित्यताप्रसङ्गात् । तस्याः पूर्वापररूपहान्युपजननलक्षणत्वात् ॥

अथ

तद्रूपावरणानां च व्यक्तिस्ते विगमो यदि ॥२६७॥

अभावे करणग्रामसामर्थ्यं किं न तद्भवेत् ।

न ह्यावरणस्याकिञ्चित्कराणि सामर्थ्यानि नाम । विगमश्चाभावः । न चाभावः कार्यं इति निवेदितमेतत् । नापि शब्दस्य नित्यस्य किञ्चिदावरणम्, असामर्थ्यादिति उक्तम् । तस्मात्सावरणे करणोपक्षेपः । नाप्येषामसामर्थ्यं तद्व्यापाराभावे ] शब्दानुपलब्धेः । अतो युक्तमेते नच्छब्दान् कुर्युः ॥

अन्यथा—

शब्दाविशेषादन्येषामपि व्यक्तिः प्रसज्यते ॥२६८॥

तथाभ्युपगमे सर्वकारणानां निरर्थता ।

यदि सर्वकारणसमानधर्माण्यपि कारणानि व्यञ्जकानि न किंचिद्विदानीं कार्यं स्यात् । न चैवमुक्तं सर्वकारणानामानर्थक्यप्रसङ्गात् । वस्तुनोऽनाधेयविशेषत्वात् । आवरणाभावस्याकार्यत्वात् । वस्तुवदेव ज्ञानस्यापि सिद्धत्वात् । ज्ञानं प्रति कारकत्वे वस्यचित्तथाभूतानामन्येषामपि तथाभावप्रसङ्गेन सर्वस्य कार्यताप्रसङ्गात् ।

तस्मादयं कारकाभिमतोऽर्थकलापो न व्यक्तौ, न क्रियायामिति व्यर्थ एव स्यात् । तथा चेदमनुपकार्योपकारकम्(क) निरीहं[1] जगत् स्यात् ॥

शब्दनित्यत्वे च—

साधनं प्रत्यभिज्ञानं सत्प्रयोगादि सम्मतम् ॥२६९॥

अनुदाहरणं सर्वभावानां क्षणभङ्गतः ।

क्षणभङ्गिनो हि सर्वभावा विनाशस्याकारणत्वादित्युक्तम्, वक्ष्यते च । उत्पत्तिमन्तश्च परतः, सत्ताया आकस्मिकत्वायोगात् । तत्रेदं प्रत्यभिज्ञानं सत्प्रयोगादिकं क्वचिदन्वेति स्थिरैकरूपे । अपरापरस्वभावपरावृत्तिष्वेव दीपादिषु दृष्टमिति विरुद्धमेव । न । अभिन्नजन्मनः साधर्म्यविप्रलम्भात् भ्रान्त्या दीपादिषु भावात् । अभिन्नजन्मेति केनावष्टम्भेनोच्यते ? तथा भेदस्यापीति चेत् । तेनैव सदायोऽस्तु । तस्यैवाभेदस्य सर्वत्र पौर्वापर्येण चिन्त्यत्वात् । विवेकादर्शनादेकत्वमिति चेत् । न । ज्ञानपौर्वापर्येण सदसत्त्वं च संशयितान् सिद्धिः । यथापराणि ज्ञानानि प्राक् सन्निहितकारणानि पूर्वज्ञानवज्ज्ञाभिदे स्वभावविशेषसम्भवात् ।

---

[1] मनीहं—क०; निरीहं—ग० वृत्तौ ।

तान्येव स्यु । अजातानि तु कारणवैकल्य सूचयन्ति । समर्थस्य जननाद् । असमर्थस्यापि पुन सामर्थ्याऽप्रतिलम्भात् । प्रतिलम्भे वा स्थैर्याऽयोगात् ।

तदय सत्प्रयोग इत्यपि जननमेव, प्रयोक्तु सामर्थ्यात्, स्वय समर्थे तस्यानुपयोगात् । प्रयोग इत्यपीष्टसाधनसमर्थोत्पादनमेव । समानजातीयोपादानापेक्षमनपेक्ष [वा] वास्यादिप्रयोगवत् कर्मादिप्रयोगवच्च कथ्यते ॥

योऽपि मन्यते समक्ष प्रत्यभिज्ञान प्रत्यक्षमेव । तत प्रत्यक्षादेव स्थैर्यसिद्धिरिति । तदप्युत्तरत्र निषे[32a]त्स्याम ।

दूष्य कुहेतुरन्योऽपि

नैव कश्चिद्धर्मो य समानजातीयमन्वेति, सर्वधर्माणामेतदवस्थत्वात् । सर्वस्थैर्यप्रतिज्ञायाश्च यथाभिधान युक्तिविरोधादन्येऽपि नित्यहेतवो वाच्यदोषा ॥

बुद्धेरपुरुषाश्रये ॥२७०॥

बाधाभ्युपेतप्रत्यक्षप्रतीतानुमितं समम् ।

यदि व्यक्तिर्बुद्धिरतथानुपूर्वी वाक्यम् । तस्या अपौरुषेयत्वप्रसाधने बुद्धीना पुरुषगुणत्वाभ्युपगमात् समयोऽस्य बाध्यते ।

प्रत्यक्ष तावदप्येतद यद् इमा बुद्धय पुरुषसम्ध्यानेभ्य [1] पुरुषगुणेभ्यो वा मनस्कारादिभ्यो भवन्तीति । न च कार्यता साधाग्या भावाभावविरोधाभ्याम् । स च भाव प्रत्यक्ष । अभावोऽप्यनुपलब्धिलक्षण प्रत्यक्षसामर्थ्यसिद्ध इति वक्ष्याम । तत एव पुरुषकार्यता बुद्धीनामनुमेयान्वयव्यतिरेकलिङ्गत्वादस्या ।

किं च—

आनुपूर्व्याश्च वर्णेभ्यो भेद स्फोटेन चिन्तित ॥२७१॥

कल्पनारोपिता सा स्यात् कथ वाऽपुरुषाश्रया ।

वर्णव्यतिरेका[2]नुपूर्वी स्फोटविचारानुक्रमेणैव प्रतिविहिता । नापि सा वर्णस्वभावा वस्तुस्वभावस्य चैतद्भिन्नत्वानतिक्रमात् । अतद्रूपेषु तद्रूपसमारोपप्रतिभासिन्या बुद्धेरय विभ्रम स्यादानुपूर्वीति । सा च कथमपौरुषेयी बुद्धिविट[3]पनप्रत्युपस्थानात् । अपि चात्यन्तिकस्य कस्यचित् स्वभावस्याभावात् अथवा ध्वनिनाऽनात्यन्तिकेन भवितव्यम् । स चाहेतुकोऽन्यहेतुको वा नित्य भवेन् न च पुरुषव्यापारान् । तस्मात् पौरुषेय ॥

कथमिदं गम्यते अनात्यन्तिको ध्वनिरन्यो वा भाव इति ?

सत्तामात्रानुबन्धित्वान्नाशस्यानित्यता ध्वने ॥२७२॥

---

[1] ०सध्यानेभ्य क० [2] विष्यान्० क० [3] विटपन—क०

न हि नाशो भावाना कुतश्चिद्भवति । तद्भावस्वभावो भवेत्, भावस्यैव स्वहेतुभ्य तद्धर्मणो भावात् । न च भावविशेषस्वभाव, तस्य निषेत्स्यमानत्वात् । तस्माद्भावमात्र स्वभाव स्यात् । तेन शब्दोऽन्यो वा सत्ताभाजनः सर्व एव भावोऽनात्यन्तिक इति सिद्ध भवति ।

न सिद्धम्, तस्यैव नाशस्यापरजन्मासिद्धे । तथा ह्यग्निना काष्ठ दण्डेन घट इति विनाशहेतवो भावाना दृश्यन्ते । अन्वयव्यतिरेकानुविधान हेतुहेतुमतोर्लक्षणमाहु । न । पूर्वस्य स्वरसनिरोधेऽन्यस्य विशिष्टप्रत्ययाश्रयेण विकृतस्योत्पत्ते ।

अस्तु तर्ह्यग्नि काष्ठविनाशहेतु । स विनाशोऽग्निजन्मा किं काष्ठमेवाहोस्विदर्थान्तरम् ?

अग्नेरर्थान्तरोत्पत्तौ भवेत् काष्ठस्य दर्शनम् ।
अविनाशात्

किमित्यर्थान्तराद्यर्थान्तरजन्मनि काष्ठमभून्न नाम, न दृश्यत वा ? अतिप्रसङ्ग एव स्यात् ।

स एवास्य विनाश इति चेत्

यदि स एवार्थोऽग्निजन्माऽभावस्तद्विरुद्धभूतत्वान्न दृश्यत इति । भवतु तस्यैव नामाऽभाव इति ।

तथापि

कथम् ॥२७३॥

अन्योऽन्यस्य विनाशः

न हि कस्यचिदर्थस्य नामकरणमात्रेण काष्ठ न दृश्यत इत्युक्तम् । न चान्योऽन्यस्य विनाशोऽतिप्रसङ्गात्, विशेषाभावात्तस्यार्थान्तरत्वेन वस्तुभूतस्य तदन्येभ्य । काष्ठेऽग्निकृत स्वभावो विनाशो न सर्व इति चेत् । काष्ठ इति क सबन्ध ? आश्रयाश्रयिभावश्चेत् । न । तस्य निषेत्स्यमानत्वात् । जन्यजनकभावश्चेत् । अग्नेरिति किम् ? काष्ठादेव भावात् । तदपेक्षानुत्पत्तेरदोष इति चेत् । अनतिशयलाभिन कापेक्षा ? लाभे वा अपर-काष्ठजन्म स्यात् । पूर्व स्वप्रत्युत्पत्तिकारण तथैव दृश्येत । तत एवाग्ने पूर्वविनाश इति चेत् । क पूर्वेणास्य सबन्ध इति स एव प्रसङ्गोऽपर्यवसानश्च ।

तदवस्थ क्रियाशतजन्मनोऽप्युत्तरमनिशम प्रत्युत्पन्नोऽयोऽग्निरपूर्वमन्य जनयतीति पूर्व तदवस्थ दृश्येत । काष्ठविनाश इति च काष्ठाभाव उच्यते । न चाभाव कार्यं तत्कारी वा कारक एवेत्यनपेक्षणीय इत्युक्तम् । स्वभावाभावस्य ततो भेदे निवर्त्तमा[32b]नस्य भावस्य स्वभाव एव समर्थित स्यादिति कथमभूतो नाम ।

तस्मान्नान्योन्यस्य विनाश ॥

अस्तु काष्ठ कस्मान्न दृश्यते ।

कोऽयमर्थान्तरभावकाष्ठदर्शनयोर्निरोध ?

तत्परिग्रहतश्चेन्न तेनाऽनावरणं यत ॥२७४॥

यदि तेनार्थान्तरेण परिगृहीतमिति काष्ठं न दृश्येत, तत्काष्ठस्यावरणमित्यापन्नम् । न चैतद्युक्तम्, आवरणं हि दर्शनं [1]बध्नीयाद्याभिघातादीनि द्रव्यसामर्थ्यानि । सर्वप्रतिबन्धे च नष्टेनैव द्रव्यं विनाशितं स्यात्, सर्वशक्तिप्रत्याख्याना[त्], पुनस्तथाप्यनाविष्प्रसङ्गाद् अनवस्था । अनभ्युपगमे चास्याभिघातसामर्थ्यादिषु सता वा तेनान्येन किं विनाशितम् ?

यदि चाग्निसमुद्भवस्य विनाशाख्यस्यार्थस्य परिग्रहात् काष्ठं न दृष्टम् ।

विनाशस्य विनाशित्वे स्यादुत्पत्तेस्ततः पुनः ।
काष्ठस्य दर्शनं

अवश्यं ह्युत्पत्तिमता विनाशेन विनष्टव्यम् । तस्मिन् विनष्टे पुनः काष्ठादीनामुन्मज्जनं स्यात् ।

हन्तृघाते चैत्रापुनर्भव ॥२७५॥
यथाऽभाव्येवमिति चेत् हन्तुर्नाऽमरणत्वत ।

विनाशस्य विनाशेऽपि न वस्तुनः प्रत्यापत्तिः । न हि हन्तरि हते तद्धतः प्रत्युज्जीवतीति चेत् । न । हन्तुस्तद्घातहेतुत्वात् । न ब्रूमो विनाशहेतोरग्निदण्डादेर्निवृत्तौ भावेन भवितव्यमिति । किं तर्हि ? भावाभावस्यात्यन्तानुपलब्धिलक्षणस्य । तन्निवृत्तौ कान्या गतिः स्वभावस्थितेः ? हन्ता हि चैत्रस्य न नाशकल्पः । किं तर्हि ? दण्डादिकल्पः । नाशकल्पं ह्यस्य मरणं तन्निवृत्तौ स्यादेवास्य पुनर्भावः ॥

अनन्यत्वेऽपि नाशस्य स्याद्घातः काष्ठमेव तु ॥२७६॥
तस्य तत्त्वावहेतुत्वं नातोऽन्या विद्यते गतिः ।

अनर्थान्तरभूतो विनाशः काष्ठात् । तदेव तद्भवति । तच्च प्रागेवास्तीति किमन्न सामर्थ्यं वह्न्यादीनाम् ? तस्मात्तु(त्वनु)पकारात्तत्र नापेक्ष्यन्ते कथंचित्, नाप्यस्येदमिति सम्बन्धमर्हति, तस्योपकारनिबन्धनत्वात् । अन्यथातिप्रसङ्गः स्यात् ।

पारम्पर्येणोपकारोऽप्यनवस्थमेव विकल्पोऽन्वेति । स किमुपकारोऽर्थान्तरमाहोस्वित्तदेवेति ? तदर्थान्तरत्वेऽपि तस्येति पुनरुपकारकत्वादिपर्यनुयोगस्तदवस्थः । तथाऽनन्यत्वेऽपि । तस्मात् सतो रूपस्य तत्त्वान्यत्वाऽव्यतिक्रमात् । उपकारोत्पादनस्य च रूपनिष्पादनलक्षणत्वात् । तदतत्क्रियाविकलो न कर्त्तैवेति न कस्यचिद्धेतुरहेतुश्च नापेक्षते । तस्मात् स्वयमेव भावस्तत्स्वभाव इति सिद्धम् ॥

अहेतुत्वेऽपि नाशस्य नित्यत्वाद्भावनाशयोः ॥२७७॥

---

[1] विबध्नी—क०

सहभावप्रसङ्गश्चेदसतो नित्यता कुतः ।

स्यादेतद्—[1]यस्यापि विनाशोऽहेतुकः सोऽवश्य नित्य इति भावस्तदभावलक्षणो विनाशश्च सह स्यातामिति । न । तस्य नित्यानित्यधर्मायोगात् । न ह्यसतश्च विकल्प सम्भवति । तयोर्वस्तुधर्मत्वात् । विनाशस्य चाकिंचित्त्वात् । भवतो हि केनचित् सहभाव स्यात् । न च विनाशो भवति । तस्माददोष ॥

असत्त्वेऽभावनाशित्वप्रसङ्गोऽपि न युज्यते ॥२७८॥

यस्माद्भावस्य नाशेन न विनाशाभिमिष्यते ।

कथमसन् विनाशो भाव नाशयेत्ततोऽविनाशी भाव स्यादित्यप्रसङ्ग एव । विनाशाद्भावनाशानभ्युपगमात् । यो हि विनाश इति किञ्चिद्ब्रूयात्स कथ ततो भावनाशमिच्छेत् ।

कथमिदानीमसति [2]नाशे भावो नष्टो नाम ? नाऽसद्विनाशा नष्टा गम्यन्ते प्रत्युत्पन्नावस्थायाम् । न हि यो येनाऽसद्वान् स तेन तथा व्यपदिश्यते, प्रतीयते वा । यथाऽश्वो विषाणेन । न वै विनाशो नाशस्येव । न तु नास्ति यो भावस्य भवेत् ।[3] भाव एव क्षणस्थितिधर्मा विनाश । तमस्य स्वभावमुत्तरकाल विभावयन्तो नाशोऽस्य भूत इति यथाप्रतीति व्यपदिश्यन्तीत्युक्तम् । न हि भावस्य किञ्चित् कदाचिद्भवति । स एव केवल स्वहेतुभ्यस्तथाभूतो भवति । तत्र केनचिद्भवता स नष्ट । किं तर्हि ? स्वभाव एवास्य येन स नष्टो नाम ॥

कथ तर्हीदानीमहेतुको विनाशो भवतीत्युच्यते ?

नाशयन् भावोऽपरापेक्ष इति तज्ज्ञापनाय सा ॥२७९॥

भवत्यहेतुरुक्तास्या भेदमारोप्य चेतसा ।

न भावो भावोऽपरस्मान्नाश प्रतिलभते, तथाभूतस्यैव स्वय जातेरित्यपरापेक्षधर्म-[33a]प्रतिषेधार्थं तत्स्वभावज्ञापनेनार्थान्तरमिव धर्मिणो धर्म चेतसा विभज्य तन्मात्रजिज्ञासाया स्वभाव एव तथोच्यते । तदेतन्मन्दबुद्धय क्वचित्तथादर्शनात् घोषमात्रविप्रलब्धा नाश गुणम्, तस्य च भावमारोप्य सहेतुकमहेतुक वाऽप्रतिष्ठितसत्त्वया भावचिन्तयाऽऽत्मानमाकुलयन्ति ॥

स्वतोऽपि भावेऽभावस्य विकल्पश्चेदयम् समः ॥२८०॥

नन्वपरभावित्वेऽपि विनाशस्य स्वत एव भावस्य भवनाश्च सत्त्वान्यत्वविकल्पस्तुल्य । सदा किमर्थान्तरभावे भावो न दृश्यते । अनर्थान्तरत्वेऽपि तदेव तद्भवति । तत्र किञ्चिदस्य जातमिति कथ विनष्टो नाम ?

नन्वत्र

न तस्य किंचिद्भवति न भवत्येव केवलम् ।

[1] यद्यपि—क०
[2] भवति—क०
[3] विनाशो—क०

इत्युक्तम् ।

न ह्ययं विनाशोऽन्यो वा कश्चिद्भावोऽस्य भवतीत्याह । किं तर्हि ? स एव भावो न भवति । यदि हि कस्यचिद्भावं ब्रूयात् भावोऽनेन निवर्तितः स्यात् । तथा च भावनिवृत्तौ प्रस्तुतायामप्रस्तुतमेवोक्तं स्यात् । न हि कस्यचिद्भावेन भावो न भूतो नाम । तदा न भूतो यदि स्वयं न भवेत् । न भवतीति च प्रसज्यप्रतिषेध एष न पर्युदासः । अन्यथेहापि कस्यचिद्भावे न प्रतिषेधपर्युदासयो रूपभेदः स्यात् । उभयथापि विधेः प्राधान्यात् । एवं चाप्रतिषेधात् कस्यचित् पर्युदासोऽपि क्वचित्र स्यात् । यदि हि किंचिन्निवर्तेत तदा तद्व्यतिरेकि वस्तुरूपेण तत्पर्युदासेन । तच्च नास्ति, सर्वत्र निवृत्तिर्भवतीत्युक्ते कस्यचिद्भावस्यैव प्रतीतेः । तथाऽनेनार्थान्तरभाव एवोक्तः स्यात् । न तयोः परस्परं विवेकः । अविवेके च पर्युदासः । तदेव व्यतिरेकाऽभावादन्वयोऽपि न स्यात्, तस्यैकस्वभावस्थितिलक्षणत्वात् । तत् स्थितिश्च तदन्यव्यतिरेके सति स्यात् । न च नास्तीत्यप्रवृत्तिनिवृत्तिकं जगत् स्यात् । तस्माद्यस्य नाशो भवतीत्युच्यते स स्वयमेव न भवतीत्युक्तं स्यात् । न वै धोपसाम्यादिषयान्तरदृष्टो विधिः सर्वत्र योजनामर्हति । न हि गर्दभ इति नामकरणाद्गर्दभधर्मा मनुष्येऽपि योज्याः । तथा न चैत्रस्य पुत्रो भवतीत्यत्र दृष्टो विधिर्विनाशेऽपि, विरोधात् । एवं चाभिधानेऽपि प्रयोजनमावेदितमेव ॥

अतो

भावे ह्येष विकल्पः स्याद्विधेर्वस्त्वनुरोधतः ॥२८१॥

भावाऽवश्यं भवन्तमपेक्षते । स च स्वभाव एव, निःस्वभावस्य क्वचिद्व्यापारः समावेशाभावात् । व्यापार इति हि तथाभूतस्वभावोत्पत्तिः । सा निःस्वभावस्य क्व स्यात् ? कथमिदानीं भवत्यभावः शशविषाणमित्यादिर्व्यवहारः । न वै शशविषाणं किञ्चिद्भवतीत्युच्यतेऽपि स्वयमस्य न भवतीति भावप्रतिषेध एव क्रियते ।

अपि च व्यवहर्तारः एतदेव व्यापारवदिव समारोप्यादर्शयन्ति प्रबन्धेन केनचित् । न तु तथा । सर्वार्थविवेचनं हि तत्र तत्त्वम् । न कस्यचित् समावेशः । न तस्यैव विनाशः, वस्तुनि तद्भावात् । असावपि यदि वक्तृभिरेव स्थाप्यते न तु स्वयं तथा, तदा न भवतीतीष्टमेतत् । तस्मात् स्वयं भवन् स्वभावो विकल्पं[1] नातिवर्तते तस्यमन्यत्वमिति ॥

*अतस्तस्यैव स्वभावस्यान्यत्वमिति । न हि स्वरसतयोरप्यन्यदेव परस्परमन्यत्वम् ।* स्वभावाप्रतिबन्धोऽन्यत्वमिति चेत् । कोऽयं प्रतिबन्धो नाम येन स च न स्यात्, नान्यस्वभावश्च । जन्मेति चेत् । सर्वकारणानां परस्परमवाच्यता स्यात् । तथा च सर्वं सर्वस्य धर्मिञ्चिदुपयोगीति न कश्चित् कुतश्चिदन्यः स्यात् । एवं चाऽवाच्यतेत्यपि कार्यकारणभाव एव शब्दान्तरेणोक्तः स्यान्नार्थभेदः । स्वभावाऽननुगमं त्वन्यत्वं ब्रूमः । स स्वभाववतां परस्परमस्त्येवेत्यन्यत्वमेव । न च तज्जन्मलक्षणात् स्वभावप्रतिबन्धादन्यः प्रतिबन्धो नाम, अनायत्तस्य व्यभिचाराविरोधात् । ततो धर्मभेदाच्चान्यत्वम् ।

---

[1] विकल्पद्वय—क०

ज्ञानकृतः प्रतिबन्ध इति चेत्। स्यादेतत्—यत्प्रतिपत्तिनान्तरीयकं यज्ज्ञानं तद्गतो [33b]नियमेन तत्प्रतिभासनात् तदतद्रूपमप्यवाच्यमिति। न। तस्य निःस्वभावत्वात् स्वयम्। स एव हि तस्य स्वभावो यः प्रतिभाति। स्वभावत्वे तद्वत् प्रतिभासनप्रसङ्गात्। अप्रतिभासमानस्य च दृश्यस्याभावात्। अदृश्यत्वेऽपि न तद्रूप ज्ञानमिति कस्य किमायत्ता प्रतीतिः। न च यद्यदायत्तप्रतीतिकं तस्य स्वभावप्रतिभास एव नश्यति। प्रकाशायत्तप्रतीतीनामिव नीलादीनाम्। का च तस्यार्थस्य प्रत्यासत्तिस्तत्र यत्तस्मिन्ननात्मरूपे प्रतीयमाने स स्वयं प्रत्युपतिष्ठते।

अतिप्रसङ्गो ह्येवं स्यात्। प्रतीयमानस्य तदुपादानतेति चेत्। कोऽयमुपादानार्थः? न कार्यकारणभावोऽनभ्युपगमात्। अभ्युपगमे वा न कार्यकारणे नियमेनाऽन्योन्यप्रतीतिप्रत्युपस्थापने। प्रतीतेरेव तन्नान्तरीयकता प्रत्यासत्तिरिति चेत्। ननु सैवाऽसति प्रतिबन्धे न युक्तेत्युच्यते। न चाकार्यकारणयोः कश्चित् प्रतिबन्ध इति चोक्तम्। यत्प्रतिपत्तिनान्तरीयका यज्ज्ञानमित्यपि तज्ज्ञाने सति स्यात्। न हि यो विज्ञाने स्वरूपेणास्वरूपासंसर्गेण न भासते तस्य किञ्चिज्ज्ञानम्। तदभावाच्च सिध्यत्यवाच्यतालक्षणमवस्तुनः। तद्रूपता वस्तुतस्तस्याऽसत्त्वभाजा भवितव्यम्॥

यस्य तु विनश्यतो भावस्य न किञ्चिद्भवति तेन

न भावो भवतीत्युक्तमभावो भवतीत्यपि।

यदप्ययं भावस्याऽभावो भवतीत्याह तदपि भावो न भवतीत्येवोक्तं भवति। एवं हि स निर्विषयो भवति, प्रतिषेधे विधेरसम्भवात्। तत एवास्य विनाशे न कश्चिद्धेतुः॥

तथा हि—

[1]अपेक्षेत परः कार्यं यदि विद्येत किञ्चन ॥२८२॥

यदि(द)किञ्चित्करं वस्तु किं केनचिदपेक्ष्यते।

सति हि कार्ये कारकं भवति। न च नश्यतो भावस्य किञ्चित् कार्यमित्युक्तम्। तस्माद्यो नाम नाशहेतुः स भावे न किञ्चित् करोतीत्यकिञ्चित्करो नापेक्षणीयः। तत्कथमिदानीमनुत्पन्नातिशयस्तदवस्थ एव भावो नष्टो नाम?

नन्वतिशयोत्पत्तावपि स एव तस्यातिशय उत्पन्न इति कथं नष्टो नाम? तेन नाप तदवस्थो नष्टो नाम। येन स्वयं न भवति तेन नष्टो नार्थान्तरोत्पादादित्युक्तम्। न ह्यतिशयोत्पत्त्या स्वयं न भूतो नाम। अभावस्य सर्वातिशयोपाख्यानिवृत्त्या सर्वभावधर्मविवेकलक्षणत्वात्। भावस्य चोत्पत्तिसमावेशलक्षणत्वात्। तस्माच्चाऽभावे कस्यचिद्भावोपक्षेपोऽन्यस्य॥

एतेनाऽहेतुकत्वेऽपि ह्यभूत्वा नाशभावतः ॥२८३॥

सत्तानाशित्वदोषस्य प्रत्याख्यातं प्रसञ्जनम्॥

---

[1] अपेक्षेत—क०

योऽपि मन्यते—अहेतुकेऽपि विनाशेऽभूत्वाऽस्य भावात् सत्ता, अनित्यत्वं च दुर्निवारम् । अभूत्वा भवन्नहेतुको भवतीत्यपि विरुद्धमिति—सोऽप्यनेनैव प्रत्याख्यातः । कस्यचिद्भावानभ्युपगमात् ॥

यथा केषांचिदेवेष्टः प्रतिघो जन्मिनां तथा ॥२८४॥

नाशे [1] स्वभावो भावानां नानुत्पत्तिमतां यदि ।

अथापि स्यादुत्पत्तु नाम स्वभाव एव भावानां य इमे क्षणस्थितिधर्माणः । स तूत्पत्तिमतामेव भविष्यति ।

न हि स्वभाव इति सर्वं सर्वस्य स्वभावो भवति । प्रतिघात्मतावत् ॥

सत्यमेतत् । तथाऽपि

स्वभावनियमाद्धेतोः स्वभावनियमः फले ॥२८५॥

नानित्ये रूपभेदोऽस्ति भेदकानामभावतः ।

न वै प्रतिघोऽन्यो वा स्वभावोऽकस्मात् प्रतिनियमवान् । यादृशी तु स्वहेतोः शक्तिस्थितिस्तादृशं फलं भवतीति हेतुस्वभावनियमात् फलस्वभावनियमः । आकस्मिकत्वेऽप्यस्योक्तो दोषः । प्रतिघात्मताहेतुस्वभावप्रतिनियमवत् नश्वरजनने[2] प्रतिनियमस्वभावं भावं पश्यामो येन तज्जन्मा तथा स्यात्, सर्वाकारजन्मनां विनाशदर्शनात् ।

नन्विदमप्यनिश्चेयमेव—सर्वाकारजन्मानो नश्यन्तीति सामान्येनोपदर्शनात् । विचित्रशक्तयो हि सामग्र्यो दृश्यन्ते । तत्र काचित् स्यादपि याऽनश्वरात्मानं जनयेत् । न । ज्ञेयाधिकारात् । ये कदाचित् क्वचित् केनचिज्ज्ञाताः सन्तो न ज्ञायन्ते, तेषां [3]सत्त्वानुबन्धी नाश इति ब्रूमः । त एव कृतका अनित्याः साध्यन्ते । न ह्यय सम्भवोऽस्ति यत्ते ज्ञानजननस्वभावाः पुनरनष्टा न जनयेयुः अपेक्षेर[34a]न्[4] वा परं तज्जननस्वभावस्य निष्पत्तेः । न च तेष्वनपेक्षेषु कस्यचित् कदाचित् किंचिज्ज्ञानं निवर्तेत । न चैवंभूतं किंचिदस्ति, सर्वस्य केनचित् कदाचित् क्वचिज्ज्ञानात् । ज्ञानमात्रक्रियायामप्यसामर्थ्ये वस्त्वेव न स्यात् । तथा हि तल्लक्षणं वस्त्विति वक्ष्यामः । तस्य च विनाशाव्यभिचारात् ॥ सत्तानुबन्धी ॥

प्रत्याख्येयाऽत एवैषा सम्बन्धस्यापि नित्यता ॥२८६॥

अत एव यथोक्ताद्वस्तुमात्रानुबन्धित्वाद्विनाशस्य शब्दवत् सम्बन्धनित्यताऽपि प्रत्याख्येया ।

या च शब्दशक्तिर्योग्यताख्याऽर्थप्रतिपत्त्याश्रयो जैमिनीयैर्वर्ण्यते, साऽर्थान्तरमेव न भवति । तथा हि योग्यतेति रूपातिशय एव भावानामित्यावेदितं प्राक् ॥

---

[1] नाशस्व० — क०

[2] नश्वरजननप्रतिनियतस्वभावं—क०

[3] सन्तानानुबन्धी—क०

[4] अपेक्षेरन्परं—क०

अस्तु वार्थान्तरं तथापि

संबन्धदोषैः प्रागुक्तैः शब्दशक्तिश्च दूषिता ।

उक्तो हि संबन्धार्थान्तरवादेऽनेकप्रकारो दोषः । तेनैव सा शब्दशक्तिर्दूषितेति न पुनरुच्यते ॥

अपि च—

नाऽपौरुषेयमित्येव यथार्थज्ञानसाधनम् ॥२८७॥

दृष्टोऽन्यथाऽपि वह्न्यादिरदुष्टः पुरुषाश्रयः ।

भवन्तु नामाऽपौरुषेयाः वैदिकाः शब्दास्तथापि संभाव्यमेवैषामयथार्थज्ञानहेतुत्वम् । न हि पुरुषदोषोपधानादेवार्थेषु ज्ञानविभ्रमः, तद्रहितानामपि प्रदीपादीनां नीलोत्पलादिषु वितथज्ञानजननात् । तदिमे शब्दाः संस्कारनिरपेक्षाः प्रकृत्या चार्थेषु प्रतिभास[1]हेतवः स्युः स्वभावविशेषाद्वह्न्यादिवत्, वितथव्यक्तयश्च नियमेनैव । नियमकारणाभावादयुक्तमिति चेत् । अवितथव्यक्तिनियमे किं कारणम् ? तस्माद्यथार्थव्यक्तिनियमवत् प्रकृत्याऽयथार्थव्यक्तिनियमः किं न कल्प्यते ? अथवा वह्न्यादिवदेवार्थेपूभयज्ञानहेतुत्वं स्यात् । न ह्यपौरुषेया अपि वह्न्यादय एकत्र यथार्थज्ञानहेतवोऽपि सर्वत्र तथा भवन्तीति । तथा शब्दानामप्यपौरुषेयत्वेऽप्युभयं स्यादिति ।

भवतु वह्न्यादीनां कृतकत्वाद्यथाप्रत्ययमन्यत्राऽन्यथात्वम्, न पुनर्नित्येषु शब्देष्वेतदस्ति । नन्वेवंविधोऽन्यत्राप्यस्त्येव धर्मस्तेषामपि संकेतबलादन्यथावृत्तेः कार्यजननस्वभावस्थितौ चैषां समयादेरपेक्षणीयस्याभावात् तत्र प्रतीतिरर्थेषु सर्वस्य सर्वदा स्यात् । न चास्ति । तस्मान्न शब्दाः[2] स्थितस्वभावा[3] इति ॥

अपि च—

न ज्ञानहेतुतैव स्यात् तस्मिन्नकृतके मते ॥२८८॥

नित्येभ्यो वस्तुसामर्थ्यान्न हि जन्मास्ति कस्यचित् ।

यद्यकृतकः शब्दः न तस्मादर्थेषु प्रतीतिरेव स्यात् । प्रतीतिजन्मेतरकालयोस्तुल्यरूपस्य प्रतीतिजन्मनि सामर्थ्यसंभावनाऽयोगात् । 'एवमयं जनको नैवम्' इति विवेचनीयस्य रूपभेदस्याऽभावात् । न यादृशोऽस्याऽजनकस्तादृश एव जनको युक्तः । अन्यापेक्षापि निषिद्धैव । तस्मान्न नित्यानां क्वचित् विज्ञानजननसामर्थ्यम्, कदाचिदजनने नित्यमजननप्रसङ्गात्, कार्यसातत्याऽदर्शनाच्च ■ ते क्वचित् कर्त्तार इत्युक्तप्रायम् ॥[4]

ये अप्येते नित्याभिमतेष्वाकाशादिषु प्रतिपत्तयस्ता अपि न तत्स्वभावभाविन्यः । तथा हि—

---

[1] प्रतीतिहे—क०
[2] शब्दाः—क०
[3] ०भावाः—क०
[4] इत्युक्तं प्राय्—क०

विकल्पवासनोद्भूता समारोपितगोचरा ॥२८९॥
जायन्ते बुद्धयस्तत्र केवलं नार्थगोचरा ।

स्वलक्षणविषया हि बुद्धिर्नियमेन तद्योग्यतोपस्थापना[1]नुविधायिनीति तस्मिन् सत्यस्मा कारणे योग्यता भवत्येव । तद्यदि नित्यानां पदार्थानां स्वलक्षणे कस्यचित् ज्ञानं स्यात्, सर्वस्य सर्वदा स्यात् । कार्यविशेषा हि व्यक्तय कथंचित् कस्यचिदुपयुज्यमानास्तदुपजनन योग्याऽतिशयप्रतिलम्भहेतु वस्तुविशेषमपेक्षन्त इति युक्तम् । तथाऽकार्यविशेषो नित्यो भाव केनचिद् गृह्यमाण तत्कारणापेक्षो यदि ग्रहणमस्य जनयत् युक्त यत्तेनैव गृह्येत । तच्च [34b] म्यिनस्वभावत्वान्न भवतीति सर्वेण वा गृह्येत न वा केनचिदिति रान् केनचिद् दृष्टो न नित्य यश्चिददतीन्द्रिय स्यात् । न चैतदस्ति । तस्मादर्थसामर्थ्यानपेक्षा समारोपितगोचरा भ्रान्तरमेवोपादान विकल्पवासनाप्रबोधमाश्रित्य बाह्यार्थशून्या भ्रान्तय एवाऽऽकाशादिषु सर्वस्य भवन्तीति । तस्मान्नापरावृत्तिधर्माण शब्दा । तत्त्वे वा कुत एतदयितयार्थप्रतीतय एवेति । न हि "अग्निर्हिमस्य भेषजम्" [तैत्ति० सं० ७ ४ १८ २] इत्यादिषु शीतप्रतिघातसामर्थ्यं लोकप्रसिद्धमप्ने ख्याप्यत इति सर्वं तथा भवति । लोकस्य स्वेच्छाकृतसङ्केतानुव्यवहारात् 'किमयं लोक स्वसङ्केतमनुविदधदेव प्रत्येत्याहोस्विच्छन्दस्वभावस्थितेः इति संदेह । लोकेच्छयाऽपि परावर्त्यमाना शब्दा पुनरन्यथाऽन्यथा दृश्यन्त इति लोकप्रसिद्ध्यनुविधानेऽपि [2]सम्भवत्येषाम न्यथाभाव । तस्मात् कस्यचिद्वैपरीत्यदर्शनेऽपि सर्वथा तथाभावो न सिध्यति ।

अकृतकस्वभावत्वेऽपि ह्येषा कश्चिन्मिथ्यार्थनियतोऽपि स्यादिति स्वभावापरिज्ञानात् सर्वत्र संशय स्यात् ॥

मिथ्यात्वं कृतकेष्वेव दृष्टमित्यकृत वच ॥२९०॥
सत्यार्थं व्यतिरेकस्य विरोधि व्यापनादपि ।

अथ यन्मिथ्यार्थं वचन तदखिल कृतकमिति हेतुव्यतिरेकेण साध्यव्यतिरेकस्य व्याप्तेरन्य-थाऽसम्भवादकृतक सत्यार्थमिति स्याद्विनाऽप्यन्वयेन । यो हि यनाऽव्याप्तस्तेन तद्व्यतिरेक आश्र इष्यते । न च विरुद्धयोरेकत्र सम्भवोऽस्ति । असम्भवे च विजातीयस्य पक्षान्तराभावादिष्टार्थसिद्ध, तत्साधकत्वाच्च[3] लिङ्गस्य व्यर्थमन्वयदर्शनम्, व्यतिरेकमात्रेणैव सिद्धेरिति । सत्यमेतद्यदि विपक्षयोर्व्याप्यव्यापकभाव सिध्येत ॥ [illegible] तु न सिद्धो यस्मात्—

हेतावसम्भवेऽनुक्ते भावस्तस्यापि शङ्क्यते ॥२९१॥
विरुद्धानां पदार्थानामपि व्यापकदर्शनात् ।

यदि हेतौ साध्यविपक्षेऽभाव सिध्येत्तदा साध्यव्यतिरेक हेतुव्यतिरेको व्याप्नुयात् । न च तत्र तस्याऽसम्भवे प्रमाण पश्याम । न चाविरुद्धविधि प्रतिषेधसाधनो युक्तोऽतिप्रसङ्गात् । न चैकत्र दृष्टस्यान्यत्रासम्भव एव, पृथग्विरुद्धसहभाविनामपि दर्शनात्, अनित्यत्ववत् प्रयत्ना-नन्तरीयकेतरयो । न च तथाविधस्याऽदर्शनादसत्त्वमेव ॥

---

[1] ०स्थानान०—क० [2] सम्भवत्येषा० क० [3] साधनत्वाच्च—क०

यस्मात्—

नासत्तासिद्धिरित्युक्तं सर्वतोऽनुपलम्भनात् ॥२९२॥
असिद्धायामसत्तायां सन्दिग्धा व्यतिरेकिता ।

न ह्ययं पुरुषमात्रकः सर्वं द्रष्टुं समर्थो येनास्य दर्शननिवृत्त्या न तथा स्यात् । यस्य हि ज्ञानं ज्ञेयसत्तां न व्यभिचरति स एव ब्रुवाणः शोभेत—अदर्शनान्नास्तीति । तदिमे स्वभावदेशकालविप्रकर्षेण सन्तोऽप्यनुपलक्ष्याः स्युः । तथा हि कोऽप्यत्यन्तपरोक्षेऽर्थे साक्षादनभिलक्षितोऽसर्वदर्शी वचनस्याकृतकत्वेनरस्य वा विभावयितुं समर्थः । प्रतिपादितं चैतत् । क्वचित्तथादृष्टानामप्यर्थानां पुनः कथंचिदन्यथाभावः । यथा क्वचिद्देशे मधुराणि निम्बफलानि संस्कारविशेषादामलकीफलानि च । न चेदानीमतद्दर्शिना तानि प्रतिक्षिप्तव्यान्येवेति । तस्मादकृतकं च स्यान्मिथ्यार्थं चेति न विरोधः पश्यामः ॥

न हीयमनुपलब्धिरदृश्यात्मस्वभावसाधिकेत्युक्तम् । तेन यत् किंचिन्मिथ्यार्थं तत्सर्वं पौरुषेयमित्यनिश्चयादव्याप्तिः । तथा हि—

अन्वयो व्यतिरेको वा सत्त्वं वा साध्यधर्मिणि ॥२९३॥
तन्निश्चयफलैर्ज्ञानैः सिध्यन्ति यदि साधनम् ।

तथा चोक्तम्—"स एव ह्युभयनिश्चितवाची स साधनं दूषणं वा । नान्यतरप्रसिद्धः सन्दिग्धवाची, पुनः साधनापेक्षत्वात्" इति । को ह्यदृष्टविरोधस्य सम्भवं प्रत्याचक्षीत । तदयं व्यतिरेकः संशयादसाधनम् ॥

अ[35a]पि च

यत्र साध्यविपक्षस्य वर्ण्यते व्यतिरेकिता ॥२९४॥
स एवास्य सपक्षः स्यात् सर्वो हेतुरतोऽन्वयी ।

यत् किंचिन्मिथ्यार्थं तत् सर्वं पौरुषेयमिति हेतुविपक्षेण साध्यविपक्षस्य व्याप्तिस्तदभावेऽभावसिद्धौ स्यात् । तदभावे भवतस्तेन व्याप्त्ययोगात् । सैव च विजातीययोर्व्यावृत्तिसिद्धिः सैवान्वयस्थितिः, विपक्षव्यवच्छेदलक्षणत्वात् साध्यस्य । प्रतिषेधरूपाच्च विधिसिद्धेरिति कोऽनन्वयोऽव्यतिरेकव्याप्तिसिद्धिः । तन्न कश्चिद्धेतुरनन्वयी नाम । एकव्यवच्छेदस्य विजातीयसिद्धिनान्तरीयकत्वात् । अनित्यनिरात्मतादिव्यवच्छेदेऽपि तथा स्यात् । न । व्यतिरेकव्यवच्छेदस्य भावरूपत्वात् । न भावरूपव्यवच्छेदे भावानुषङ्गः । अभावव्यवच्छेदस्तु नियमेन भावोपस्थापनः । भावाभावयोरन्योन्यविवेकरूपत्वात् । अभावरूपस्तु व्यतिरेकः । स व्यतिरिच्यमानो भावमुपस्थापयति ।

नैवं नैरात्म्यादयः, स्वभावविशेषात् । क्रियाभोगाधिष्ठानात्स्वतन्त्रो ह्यात्मा निरात्मा । तत्त्वानन्यत्वलक्षणत्वादात्मनः । तद्रूपं नैरात्म्यं नात्मनिवृत्तिमात्रम्, अन्यथा निरुपाख्ये कृतकत्वाद्ययोगात् न ततो नैरात्म्यसिद्धिः स्यात् । आत्मव्यवच्छेदेन निरात्मनो भावस्य परामर्शादिदोष इति चेत् । पर्युदासे वस्तुसंस्पर्शात्तदेव वस्तुरूपं नैरात्म्यमायातम् ।

यद्यपि नाऽभावरूपो व्यतिरेकस्तस्य भावरूपव्यवच्छेदे न भावसिद्धिः स्यादिति नान्वयानुषङ्गस्तथाऽनैरात्म्येऽपि न भावसिद्धिः स्यात् । यथा 'नेदं निरात्मकं जीवच्छरीरं प्राणादिमत्त्वादिति' विपक्षयोर्व्याप्यव्यापकभावचिन्तायामप्राणादिमत्त्व एव नैरात्म्यं दृष्टम्, तदभावे च नास्तीति स्वयं न भवदपि प्राणादीनां नात्मनि सिद्धिमुपस्थापयति । तथा साध्येऽपि प्राणादिभिर्व्युदस्यमानं स्यात् केवलम् । नैरात्म्येऽभावात् प्राणादयस्तन्निरसना नात्मोपस्थापनास्तत्र भावाऽसिद्धेः । न च नैरात्म्यनिवृत्त्यात्मसिद्धिर्विपक्षव्यतिरेकदर्शनेऽपि प्रसङ्गात् । तत्र विपर्ययव्याप्तिर्व्यतिरेकासिद्धौ । तत्सिद्धिरेव चान्वयसिद्धिः । असिद्धौ वा तद्व्यतिरेकनिवृत्तिसिद्धावपि तदसिद्धिरिति साध्येऽपि प्रसङ्गः । तत्राऽन्वया व्यतिरेकव्याप्तिः ।

मिथ्यार्थतायास्तु पौरुषेयत्वेन व्याप्त्याऽपौरुषेयान्निवृत्तावपि न सत्यार्थत्वं प्रकारान्तरसम्भवात् । द्वैराश्येन शब्दानामेतत् स्यादेकनिवृत्तौ गत्यन्तराभावात् । ते त्वनर्थका अपि स्युरिति नेष्टसिद्धिः ।

अर्थप्रतीतेर्नानर्थका इति चेत् । न । एष पुरुषव्यापारः स्यात् । अर्थान्तरविकल्पवत् । यथाऽनर्थकत्वेऽपि भरतोर्वश्यादिचरितादिकमर्थमन्येऽन्यथा व्याचक्षते । तदनुसारेण केषाञ्चित् प्रतीतिः । तथाऽयमनर्थकेष्वप्यर्थविकल्पः पुरुषकृतः स्यात्, न शब्दस्वभावकृतः, पुरुषोपदेशापेक्षणादर्थान्तरवदेव । न हि प्रकृत्या प्रकाशनात्मानमपेक्षन्ते वह्न्यादयः । पुरुषस्तु स्वसमयव्यापारमात्रेण उपदिशतीति न्याय्यम् । पुरुषसमितनिसर्गसिद्धयोरुपदेशापेक्षणाविशेषात्, अन्यविशेषाभावाच्चैको नैसर्गिकोऽन्यस्तु पौरुषेय इति दुरवसानम् ।

अस्ति विशेषः प्रमाणसंवाद इति चेत् । एतदुत्तरत्र निपरस्याम —'नास्त्यत्यन्तपरोक्षेऽर्थे प्रमाणान्तरवृत्तिः' इति । समानधर्मणोरर्थयोः प्रमाणसंवादमात्रविशेषादेकस्याऽपौरुषेयत्वे बहुतरमिदानीमपौरुषेयम् । सन्ति पुरुषकृतान्यपि वाक्यानि कानिचिदेवंविधानीति तेष्वपि प्रसङ्गः । तद्वेदानामप्यभिमतार्थवत्ता पौरुषेयी च स्यात् प्रमाणानुरोधिनी च ॥

अपि चेदं 'मन्त्रा अपौरुषेयाश्चेति' व्याहतं पश्यामः । [35b] तथा हि

समयत्वे हि मन्त्राणां कस्यचित् कार्यसाधनम् ॥२९५॥

युक्तम् । यद्येते मन्त्राः कस्यचित् समयः—यथा मत्प्रणीतमेतदभिमतार्थोपनिबन्धनं वाक्यमेव नियुञ्जानमनेनाऽर्थेन योजयामीति—परार्थपरतानुरोधेनाऽन्यतो वा कुतश्चिद्धेतोः कृतः स्यात् । तदा मन्त्रप्रयोगात् कदाचिदर्थनिष्पत्तिर्युक्ता, नृपसमयादिव तत्पाठकानाम् ॥

अथापि भावशक्तिः स्यादन्यत्राप्यविशेषतः ।

न वै पुरुषसमयात् मन्त्रेभ्योऽर्थसिद्धिः । किं तर्हि ? भावस्वभाव एष यदिमे कथञ्चिन्नियुक्ताः फलदास्तर्हि रूपं वर्णानां सर्वत्राविशिष्टमिति यथाकथञ्चित् प्रयुक्तादपि फलं स्यात् । वर्णा एव हि मन्त्रो नान्यत् किञ्चित् ॥

क्रमो मन्त्र इति चेत् ।

क्रमस्यार्थान्तरत्वं च पूर्वमेव निराकृतम् ॥२९६॥

न वर्णव्यतिरिक्तोऽन्यः क्रम इति निवेदितमेतत् । अव्यतिरेके च वर्णा एव मन्त्रास्ते चाऽविशिष्टा सर्वत्रेति सर्वथा फलदाः स्युः । उपप्लवस्त्वल्पीयसोऽपि क्रमस्य भ्रंशाद् दृष्टः । कस्यचिदनुष्ठानाद्देवताऽसन्निधेः, असाकल्येन विराधनाच्च । सर्वभ्रंशे तु कस्यचिदेव समयस्याननुष्ठानादसन्निधेर्वाऽनर्थो ॥

किं च—क्रमस्यानर्थान्तरत्वेऽर्थान्तरत्वे वा वर्णात्मनस्तत्क्रमात्मनो वा मन्त्रस्यार्थहेतोरकृतकत्वान्नित्यस्य नित्यं सन्निधानमिति

नित्यं तदर्थसिद्धिः स्यात्

यतो हि भावशक्तेः फलोत्पत्तिः सा अविकलेति न फलवैकल्यं स्यात् । न हि कारणसाकल्ये कार्यवैकल्यं युक्तम् । तस्याकारणत्वप्रसङ्गात् ॥

न केवलान्मन्त्रप्रयोगादिष्टसिद्धिस्तस्य विधानापेक्षत्वादिति चेत् ।

असामर्थ्यमपेक्षणे ।

यदि हि मन्त्रा विधानादन्यतो वा कञ्चित् स्वभावातिशयमासादयेयुः, स तत्र समर्थोऽपेक्ष्य स्यात् । न च नित्येष्वेतदस्तीत्युक्तम् । तत् किमयमसमर्थोऽपेक्ष्यत इत्यनपेक्ष्यत इत्यनपेक्षा सदा कुर्युः । न वा कदाचिदनतिशयात् ॥

सर्वस्य साधनं ते स्युर्भावशक्तिर्यदीदृशी ॥२९७॥

प्रयोक्तृभेदापेक्षा च नाऽसत्कार्यस्य युज्यते ।

यदि भावशक्त्यैव मन्त्राः सिद्धिप्रदाः, न ते कञ्चित् परिहरेयुर्यजमानमन्यं वा । न ह्यन्यं प्रति स्वभावोऽसद्भावो भवति, तस्य तेनाऽनपकर्षणात् अन्येन चानुत्कर्षणात् । केनचित् सह कार्यकारणभावाऽयोगात् प्रत्यासत्तिविप्रकर्षाभावात् । अत एवास्याऽसत्कार्यत्वात् प्रयोक्तापि नास्ति । यतः प्रयोक्ता फलमश्नुवीत ॥

सत्कार्यस्यापि भावस्य वस्तुभेदो हि भेदकः ॥२९८॥

प्रयोक्तृभेदान्नियमः शक्तौ न समये भवेत् ।

आधेयविशेषा ह्यनित्या भावास्तद्धेतोः स्वभावभेदे तत्र समासादितातिशयत्वादन्यथाऽन्यथा स्युः, नाऽभेदे कारणाविशेषे कार्याविशेषात् । विशेषे तस्याहेतुकत्वप्रसङ्गादित्युक्तप्रायम् । तदिमे मन्त्राः स्वभावातिशयान् फलदायिनः कार्या अपि न शूद्रादिप्रयोगेऽप्यन्यथा स्युः, शूद्रविप्राभिधानयोः पुरुषयोः स्वभावाभेदात् । न हि पुरुषेच्छानुविधायिनो नामव्यवहारभेदात् स्वभावभेदानुवर्तिनामर्थानामन्यथात्वमस्ति ।

तयोर्जातिभेद इति चेत् । स सत्वाकृतिगुणशक्तिभेदे[1] दृष्टो गवाश्ववत् । अनुपदेश

[1] इष्ट —क०

येन लोकः प्रतिपद्यते । न तद्वदनयोः क्वचिदपि गुणं विनियतं पश्यामः । अपश्यन्तश्च कथमेव प्रतिपद्येमहि ।

योऽप्ययं नामभेदान्वयो लोके प्रतीतिभेदः, सोऽसत्यपि जातिभेदे व्यापारविशेषानुष्ठानात्, अन्वयाच्च स्यात् । वैद्यवणिग्व्यपदेशादिवत् ।

तद्विशेषैर्विशिष्टेन प्रयुज्यमाना मन्त्रास्ततोऽविशिष्टमेव स्वभावमासादयन्ति । तेनाविशेषेण फलदाः स्युः । यदा तु समयादेभ्यः फलं तदाऽप्ययमदोषः, समयकारस्य एवं [36a] फलोत्पत्तिनियमात् । स्वभाववृत्तयो हि भावास्तन्मुखेन प्रसङ्गमर्हन्ति । न पुरुषेच्छावृत्तयस्तेषां यथाकथंचिद्वृत्तेः ॥

यदपि प्रयोक्ता फलमश्नुत इति प्रयोगे हि समीहितार्थयोग्यस्योत्पादनम्, सन्तानपरिणमनं वा पश्यामः । तदुभयं विशेषजन्मनि स्यात् । अन्यथा—

समाधेयविशेषाणां किं कुर्वाणः प्रयोजकः ॥२९९॥

येन ततः कश्चित् फलमश्नुतेऽन्यो न ॥

प्रयोगो यद्यभिव्यक्तिः सा प्रागेव निराकृता ।

न हि नित्यानां काचिदभिव्यक्तिरित्युक्तं यतोऽभिव्यञ्जकः प्रयोक्ता स्यात् ॥

व्यक्तिश्च बुद्धिः सा यस्मात् स फलैर्यदि युज्यते ॥३००॥
स्याच्छ्रोतुः फलसम्बन्धो वक्ता हि व्यक्तिकारणम् ।

न हि शब्दस्यान्यतः स्वरूपपरिणामो व्यक्तिः । नाप्यावरणविगमनम् । किन्तु तद्विषया प्रतीतिः । अश्रूयमाणेऽव्यक्तव्यपदेशात् । तत्र यदि बुद्धिहेतुर्वक्ता स्यात्तत् तुल्यं श्रोतर्यपीति सोऽपि फलं वक्तृवदश्नुवीत । न हि वक्तुः कश्चिदन्यस्तद्भावोऽन्यत्र तद्बुद्धिहेतुत्वात् । परोपाधिबुद्धिः श्रोतुर्न वक्तुरिति विशेष इति इति चेत् । कः पुनरुपयोगो वक्तुः श्रोतरि येनोपाधिरिष्यते । ततः शब्दश्रुतिरिति चेत् । ननु तदेवेदं पर्यनुयुज्यते कथं ततः इत्यगवन्धात् ? विपर्ययोपनयनादयमस्य श्रावकः स्यात् । तच्च न शक्यम्, तस्य कथंचिदप्यपरिणामात् । [1]इन्द्रियसंस्कारादयोऽप्युक्ताः । मां श्रावयति, अहं श्रावयामीति तयोः प्रत्ययाद् वक्तृश्रोतृभेद इति चेत् । अनुपकार्योपकारकाद् भ्रान्तिमात्रात्तद्भावेऽतिप्रसङ्गोऽन्यत्रापि भ्रान्त्या प्रत्ययदर्शनात् । सर्वथोपकाराभावे च तथा प्रत्ययो न युक्तः । सर्वेषां परस्परमेव प्रसङ्गात् । भ्रान्तिरपि कुतश्चिदुपकारे सति कथंचित् प्रत्यासत्त्याऽन्यत्र भवति । साऽप्यत्यन्ताऽनुपकारे न स्यात् ।

तस्माद्वक्तृश्रोत्रोर्व्यक्तिहेतुत्वेऽपि विशेषाभावात्तुल्यः फलसम्बन्धः स्यात् ॥

अपि च—

अनभिव्यक्तशब्दानां करणानां प्रयोजनम् ॥३०१॥

मनोजपो वा ध्येयं स्यात् शब्दो हि श्रोत्रगोचरः ॥

[1] इत आ तिब्बतीभाषातोऽनूदितं श्रीसांकृत्यायनेन स्वसम्पादितवृत्तौ ।

श्रोत्रग्रहणलक्षण शब्द । तदतिक्रमेऽतिप्रसङ्गात् ।

नन्वेव सामान्येऽपि प्रसङ्ग । न ब्रूम शब्द एवेति । शब्दस्वलक्षणस्य तल्लक्षण, लक्षणा-न्तराभावात् । तत्र यदि शब्दात्मना मन्त्राणामभिव्यक्तिहेतु प्रयोक्ता, अनभिव्यक्तश्रुतिवि-षयाणा कल्पना प्रयोक्ता जापी न मन्त्रफलेन युज्यते । नापि मनसा जपन् । नहि तदा श्रोत्रेण कश्चिदर्थं विभावयाम । न चाशब्दात्मा मन्त्र ॥

पारम्पर्येण तज्जत्वात् तद्वचेत्ति साऽपि चेन्मति. ॥३०२॥

न हि मनसा ध्यायतोऽपि मन्त्राभासा बुद्धि शब्दश्रवणादृते । तत शब्दप्रभवात् साऽपि शब्दव्यक्तिरेव । अनवस्थैव स्यात्—शब्दार्थविकल्पानामपि परम्परया प्रभूतिरस्तीति ॥

तेऽपि[1] तथास्युस्तदर्था चेदसिद्ध कल्पनान्वयात् ।

न ब्रूम—सर्वा शब्दप्रभवा बुद्धिस्तद्व्यक्तिरिति । या तु तद्विषया सा तस्य व्यक्तिरिति । मनोविकल्पस्य तद्विषयत्वमसिद्धम् । न हि स्वलक्षणे विकल्पाना वृत्तिरिति निवेदयिष्याम ।

ते हि यथास्वमाम्नरात् विकल्पवासनाप्रबोधादनपेक्षितबाह्यार्थोपनिपाता भवन्ति, बाह्याभावाऽनागमेऽपि भावात् । न हि यो यस्य सतोऽपयान नापेक्षते स तस्य हेतु । अहेतुश्च कथ विषय । तस्मान्न मनोविकल्प शब्दव्यक्तिर्यतस्ताद्वान् प्रयोक्ता स्यात् ।

तत्प्रभूता तद्विषया बुद्धिस्तद्व्यक्ति, तदाश्रय प्रयोक्तेत्यत्राप्युक्तम्—श्रोतर्यपि प्रसङ्ग इति । तज्ज्ञाने च प्रयोग शब्द पुरुष व्याप्रियते, तस्य ज्ञानजननात् । स पुरुष शब्दे, तदात्मन्यनुपकारात् । अथ च पुरुष शब्दाना प्रयोक्तेत्यलौकिकोऽय व्यवहार ।

सर्वेषा शब्दस्वभावाना मन्त्राणा प्रयोगात् फलावाप्तौ व्यर्थो मनोजप, विकल्पस्य शब्दरूपाऽसस्पर्शात् ॥

स्वसामान्यस्वभावानामेकभावविवक्षया ॥३०३॥

इष्यते समयकाराणामविरोधो न वस्तुनि ।

समयकारस्तु स्वलक्षणमिन्द्रियविषय सामान्यलक्षण च विकल्पप्रति[36b]भास मयाव्यवहार सतुल्या सकल्प्य समयमारोपयत् । यथासमय चार्थं निगादयेदिति न मनो-जपादो दोष । वस्तुस्वभावास्तु [2]फलावाप्तावनत्स्वभावसस्पर्शे न स्यात् ॥

यदुक्त ■ वर्णेभ्योऽन्या काचिदानुपूर्वीति । तत्र

आनुपूर्व्यामसत्या स्यात् सरो रस इति श्रुतौ ॥३०४॥

न कार्यभेद इति चेत्

---

[1] अत्र 'अपि'ग्रहणे एकाक्षराधिक्य किन्तु वर्णगोभिमतत्वात् स पाठ गृहीत ।

[2] फलोत्पतौ—क०

न हि सरो रस इत्यादिपदेषु कश्चिद्वर्णभेद । न च वर्णव्यतिरिक्तमन्यदस्ति कार्यभेद स्यात् । भिन्नाश्च तयो प्रतिभा पश्याम । आनुपूर्व्येव चानुयाम् । न च कारणाभेदे कार्यभेदो युक्त । तस्मादस्ति सा भेदवती यतोऽयं प्रतीतिभेद ॥

सत्यम् ।

अस्ति सा पुरुषाश्रया ।

तथा हि—

यो यद्वर्णसमुत्थानज्ञानजात् क्रमतो ध्वनि ॥३०५॥
जायते तदुपाधि स श्रुत्या समवसीयते ।
तज्ज्ञानजनितज्ञान स श्रुतायपटुश्रुति ॥३०६॥
अपेक्ष्य तत्स्मृति पश्चादायत्ते स्मृतिमात्मनि ।
इत्येषा पौरुषेय्येव तद्धतुग्राहिचेतसाम् ॥३०७॥
कार्यकारणता वर्णेष्वानुपूर्वीति कथ्यते ।

चित्तसमुत्थाना हि वाग्विज्ञप्तिर्वर्णपदवाक्याभिमाना । तत्र सकारसमुत्थापनचेतसा समनन्तरप्रत्ययेन अकारोत्थापनचित्तमुत्पाद्यते । तथा रेफाऽकारविसर्जनीयोत्थापनानि पूर्वपूर्व प्रत्ययानि । तदिमेऽन्याश्चहेतवो वर्णा स्वकारणानुपूर्विजन्मान । श्रुतिकालेऽपि यदा मन्दधारिण पूर्ववर्णज्ञानसहकारिप्रत्ययापेक्षा स्वज्ञान जनयन्ति, तदा पूर्ववर्णस्मरणापेक्षा एव स्मृति मुपलीयन्ते । स एव वर्णानां भिन्नकार्यकारणभावप्रत्ययनिवृत्तिधर्मा भिन्ननिवर्त्तनधर्मा च स्वभाव पुरुषाकारभेदभिन्न क्रम इत्युच्यते ॥

अन्यदेव ततो रूप तद्वर्णाना पद मतम् ॥३०८॥
कर्तृसंस्कारतो भिन्न सहित कार्यभेदकृत् ॥

तस्मात्स खल्वेक एव पदेषु वर्णाना स्वभाव, कर्तृचित्तसंस्कारभवेन भवात । न च परस्परराहित कार्यभदहेतु ॥

सा चानुपूर्वी वर्णाना प्रवृत्ता रचनाकृत ॥३०९॥
इच्छाऽविरुद्धसिद्धीना स्थितक्रमविरोधत ।

कार्यकारणभूतप्रत्ययोत्पन्नस्वभावविशेषो वर्णानामानुपूर्वीत्युक्तम । सा च पुरुषविकर्क विचारकृतेति न स्थितक्रमा वर्णा, इच्छाऽविरुद्धसिद्धक्रमत्वात । कर्मविशयानुक्रमवत । न हि स्थितक्रमाणा देशकालयोर्हिमवद्विन्ध्यमलयादीना बीजाङ्कुरादीना च स्वेच्छया क्रमरचना शक्यते कर्तुम् ॥

तत एव पुरुषधर्मसख्याते विकल्पानुक्रमे सति भावात् भवति चाऽभावात

कार्यकारणतासिद्धे पुसा वर्णक्रमस्य च ॥३१०॥
सर्वो वर्णक्रम पुभ्यो दहनेन्धनपङ्क्तिवत् ।

सतीन्धने दाहवृत्तेरसत्यभावाददृष्टेन्धनोऽपि दहनो नाऽनिन्धनस्तस्य देशकालनियमाऽयोगात्। नियमे च तस्यैवेन्धनत्वाद्दहनोपादानलक्षणत्वादिन्धनस्य। तथाऽयमपि वर्णानुक्रमपुरुषविकल्प यदि नापेक्षेत निरालम्बन स्वयं प्रकाशेत। यत्नेऽपि न शक्येत। तत्प्रभवात् वचिच्छक्तौ सर्वस्तथा स्यात्, विशेषाभावात्। तद्भावभाविनस्तद्विशिष्टस्य वाऽन्यकृतौ सर्वत्र कार्यकारणभावश्च निराकृत स्यात्, अन्वयव्यतिरेकलक्षणत्वात्तस्य। लक्षणान्तर वा वक्तव्यम्। सर्वेऽपि घटादयो भावा कृत्रिमा अकृत्रिमा प्रसजन्ति। तत्राप्येवं विकल्पनायाः सम्भवात्, विशेषाभावाच्च। तानपि हि परक्रियादर्शनरूपकानथान्य करोत्यविदितकर्तारश्च केचिदिति सर्वेषा केषाञ्चिद्वाऽक्रियाभिनिवेशोऽस्तु। तस्मात सर्वैव वर्णानुपूर्वी प्रसिद्धकार्यकारणभावस्तुधर्माऽनतिक्रमात् पुरुषकृता ॥

अत एव

असाधारणता सिद्धा मन्त्राख्यक्रमकारिणाम् ॥३११॥
पुंसा ज्ञानप्रभावाभ्यामन्येषा तदभावतः ।

अथ क्रमो वर्णाना विषनिर्घातादिसमर्थो नान्य इति यद्यन्योऽपि जानीयात् स तथैव प्र[37a]तिपद्येत। न चैवम्। तस्मादयमनुक्रम स्वभावतोऽपि कार्यकृत् कैश्चिदेव विज्ञात इत्यस्ति परोक्षार्थदर्शी पुरुष। न हि—'अयमर्थं साधयति' शक्यमुन्नेतुम्, असंकीर्णस्य लिङ्गविशेषस्यासिद्धे।

प्रत्यक्षयोरप्यनुपदिष्टयोर्मन्त्रामन्त्रयोरपरिज्ञानात्। उपदेशेऽपि कथञ्चित् स्वभावविवेकाप्रतीतेरन्यत्र कार्यसंवादात्। तस्य च करणात् प्राग्द्रष्टुमशक्यत्वात्।

न चायमनुक्रम स्वभावतः कारक, कस्यचिदाशु सिद्धे। अन्यस्य चिरादपरस्य व्रतचरणाद्यपेक्षणात्। एकस्मादपि कर्मण कयोश्चिद्दर्शनियमदर्शनात्। बहूनामपि मन्त्राणा पुन क्वचिद्विसंवादात्। न ह्ययं प्रकार स्वभावे युक्त, स्वभावस्य सर्वत्राऽविशेषात्। पुरुषस्तु स्वेच्छावृत्ति तत्तत्समाराधनादिवशात्, मेधाविशेषाद्वा कञ्चिदनुगृह्णाति, नापरमिति युक्तम्।

व्रतचर्याप्रसादिना धर्माऽधर्मोपचये धर्माऽधर्मात्मनोर्वा प्रकृत्या सिद्ध्यसिद्धी इति चेत्। न। धर्मविरुद्धानामपि कौर्यस्तेयमैथुनहीनकर्माविरुद्धाना व्रतानां डाकिनीभगिनीतन्त्रादिषु दर्शनात्। तैश्च सिद्धिविशेषात्। न चैवंविधो धर्मस्वभाव इति च यथावसर निवेदयिष्याम। मैत्रीशौचधर्मपरायणा[ना] च तन्निमित्तमेव कस्याञ्चित् सिद्धेरसिद्धे, विपर्यये च पुन सिद्धे। न चैकरूपात् कर्मण स तद्विरोधी धर्मो युक्तो अधर्मश्च।

कथमिदानीं धर्मफलमिष्टमधर्मात्मनो व्रतादेरस्तुते? न वै तस्यैव तदिष्ट फल व्रतादेः। विपाकोऽपि तु पूर्वस्य कर्मण। ब्रह्महत्यादेरनुष्ठानात् प्रायश्चित्तवत्। तस्य त्वधर्मात्मनो व्रतस्यागामि फलमनिष्टम्। स तु मन्त्रादिप्रयोगस्तस्येष्टफलस्य कर्मण कथञ्चिदुपकारात् पाचक, चिरत्वादुपकारकत्वाक्ते। पुरुषविशेषाश्रयविपाकधर्मा स धर्मस्तेन कृत स तथा तदाराधनेन फलतीति। तत्प्रयोगोपनागविपाककर्मण कृतत्वादनन्तरस्य कर्मण। विनापि पुरुषेण तदुपकारात् फलमिति चेत्। न। पुरुषाराधनाक्रियाविमुक्तिविपर्ययप्रसङ्गात्।

तस्याप्युपकारत्वे सिद्धः पुरुषविशेषो साधारणगुणः, तदधिमुक्तेरेव हि विषयक(विषक)-र्मादिकरणात् ।

तस्मान्न मन्त्राः पुरुषप्रणीता अपि तदुपयोगनिरपेक्षाः स्वभावेन फलदा ॥

येऽपि तन्त्रविदः केचिन्मन्त्रान् कांश्चन कुर्वते ॥३१२॥
प्रभुप्रभावस्तेषां स तदुक्तन्यायवृत्तितः ।

रथ्यापुरुषा अपि केचन तन्त्रज्ञाः स्वयकृतैर्मन्त्रैः किंचित् कर्म कुर्वन्ति । तथान्योऽप्यन-तिशयश्च स्यात् कर्ता च मन्त्राणामिति । न । तेषां प्रभाववत्तयाधिष्ठानात् । तत्कृत हि ते समयमनुपालयन्तस्तदुपदेशेन च वर्त्तमाना समर्था, तत्समयोपदेशनिरपेक्षाणामसा-मर्थ्यात् । तत्रापि तदाकारध्यानादेरेव प्रयोगात् । तस्मात्तदधिष्ठानमेव तत्तादृशमित्युन्नेयम् ।

अपि च—सोऽपि तादृशः प्रभाववानेवाऽनन्यसाधारणशक्तित्वादिति पुरुषविशेष एव समर्थितः ॥

कृतकाः पौरुषेयाश्च वाच्याः मन्त्राः फलेप्सुना ॥३१३॥

न ह्यकृतकाना प्रयोग सम्भवति । न चाप्रयुक्तेभ्यः फलमिति प्रयोगात् फलमिच्छता कृतका मन्त्रा वाच्या, पौरुषेयाश्च, पुरुषाधिष्ठानमन्तरेणान्यतोऽसंभवत्फलाना फलदर्शनात् । कृतसमयकाव्यादिवत् ॥

अशक्तिसाधन पुंसामनेनैव निराकृतम् ।

प्रतिपादिता हि पुरुषकृतास्तदधिष्ठानाच्च फलदा मन्त्रा । तदस्ति कश्चिदतिशयवान् स इति । तत्प्रतिक्षेपसाधनान्यपि प्रतिव्यूढानि ॥

बुद्धीन्द्रियोक्तिपुंस्त्वादिसाधनं यत्तु वर्ण्यते ॥३१४॥
प्रमाणाभं यथार्थोऽस्ति न हि शेष[37b]वतो गतिः ।

यत्तु बुद्धीन्द्रियवचनयोगात् पुंस्त्वादिति पुरुषातिशयप्रतिक्षेपसाधन तत्सन्दिग्धव्यतिरेकमेव, प्रतिक्षेपसामान्यसंसाधनयोरसंभवात् । न ह्यतीन्द्रियेष्वदर्शिन. प्रतिक्षेप. संभवति । सता-मप्यदर्शनात् । अत एव विरोधासिद्धेः । अविरोधिना च सह समवायाविरोधादित्य-प्युक्तम् । नापीतरसामान्यसिद्धिर्विशेषाऽसंभवस्य ज्ञातुमशक्यत्वात् । ईदृशेषु चानुपलब्धेर्हे-तुत्वप्रतिक्षेपात् । पुंस्त्वादिसाम्येऽपि कस्यचिद्विशेषस्य दर्शनात् । सम्भवद्विशेषे च साम्यादसिद्धि-रित्युक्तम् । तस्माच्छेषवदनुमानमेतत् व्यतिरेकस्य सदेहादगमकमदर्शनेऽपि विपक्षवृत्ते. ॥

अपि चैवंवादिनो जैमिनीयाः स्वमेव वाद स्ववाचा विधुरयन्ति । तथा हि—

अयमर्थो नायमर्थ इति स्वयं शब्दा वदन्ति न ॥३१५॥
कल्प्योऽयमर्थः पुरुषैस्ते च रागादिसंयुताः ।
तत्रैकस्तत्त्वविन्नान्य इति भेदश्च किं कृतः ॥३१६॥

तद्वत् पुंस्त्वे कथमपि ज्ञानी कश्चित् कथं न वः ।

न खल्वेते वैदिकाः शब्दा एव विक्रोशन्ति–एते भवन्तो ब्राह्मणा अयमस्माकमर्थो ग्राह्यो नान्य इति। केवलमभिव्यक्तार्थविशेषसंसर्गाः श्रुतिमभिपतन्ति। तत्रैव पुरुषः कश्चिदर्थं कल्पयत्यन्योऽपरम्। न च शब्दानां कश्चित् स्वभावप्रतिनियमो येनैकमर्थमनुरुन्धते नाऽपरम्। केवलं समयवशात्त तथाविदधतो दृश्यन्ते। तेषामविदितार्थनियमानामत्यक्षावेशादविप्लुतानेव दोषोपप्लुतः कश्चित्तथा व्याचष्टे नापर इति न न्याय्यम्।

अथ कुतश्चिददर्शनाद् बुद्धीन्द्रियादीनां स एव वेत्ति नापरः। तस्य कुतोऽयमतीन्द्रियज्ञानातिशयः? तथान्योऽपि द्रष्टा देशकालस्वभावविप्रकृष्टानामर्थानां किमसंभवी दृष्टः। न हि तत्प्रतिक्षेपसाधनानि कानिचिद्यानि नैव उपलभ्यन्ते। यथा च तत्साधनसंभवेऽप्यस्य विशेषस्तथान्यस्यापि स्यादित्यनभिनिवेशो युक्तः॥

यस्य प्रमाणसंवादि वचनं सोऽर्थविद्यदि ॥३१७॥

न ह्यत्यन्तपरोक्षेषु प्रमाणस्यास्ति संभवः ।

स्यादेतत्–न वयं पुरुषप्रामाण्यात्[1] कस्यचिद्व्याख्यानमभिनिविष्टाः। किं तर्हि? प्रमाणसंवादात्। बहुष्वपि व्याख्यातृषु यं प्रमाणं प्रत्यक्षादिकं संस्पन्दयति सोऽनुमन्यते। तन्न। अतीन्द्रियेष्वदृष्टादिषु प्रमाणान्तराऽवृत्तेः। अशक्यसंभवादेव ह्यागमस्तत्प्रतीत्यर्थमुपयाष्यते। अन्यथा सत्यपि तस्मिन् प्रमाणान्तरावृत्तावप्रतिपत्तेः। ततश्च केवलादर्थप्रतिपत्तेरसाधनमेवागमः स्यात्। केवलादन्यतोऽप्यतीन्द्रियेष्वप्रतिपत्तिरिति चेत्। कथमतीन्द्रियस्य नाम प्रत्यक्षादिविषयश्च? ते पुनः स्वविषयेऽप्यागममपेक्ष्यैव साधकाश्चेत्, अनागमो धूमादेरग्न्यादिप्रत्ययो न स्यात्। न वै प्रवृत्ते आगमे प्रमाणान्तरमन्विष्यते। किं तर्हि? सर्वागमप्रवृत्तिर्न जायत इति चेत्। स्वयं समर्थस्य प्रसाधनेऽस्य तदागमोपधानं कमतिशयं पुष्णाति? असमर्थं त्वागमप्रवृत्तिमपि नैव साधयिष्यति। या चातीन्द्रियार्थसंबद्धाऽऽगमप्रवृत्तिरतीन्द्रिया कथमन्येन सिद्धा?

अन्यथैवमप्यागमलक्षणं स्यात्। तथा हि—

यस्य प्रमाणसंवादिवचनं तत्कृतं वचः ॥३१८॥

स आगम इति प्राप्ता निर्वाऽपौरुषेयता ।

तुल्येऽप्यागमवादे प्रमाणबलादस्यागमस्य क्वचिदागमत्वे प्रमाणसंवादो वचनानामागमलक्षणं स्यात्। नापुरुषक्रिया, तस्याः सर्वत्र तुल्यत्वेऽपि प्रामाण्यावाधनात् प्रतिपत्तेस्तद्भावेऽप्यन्यत्र प्रमाणाभावादित्यनिष्टत्वात्॥

किं च—

यद्यत्यन्तपरोक्षेऽर्थेऽनागमज्ञानसंभवः ॥३१९॥

[1] प्या —क०

**अतीन्द्रियार्थवित् कश्चिदस्तीत्यभिमतं भवेत् ।**

यद्यागमानपेक्ष ज्ञानयथातथ्य पुरुषस्येष्यते परोक्षेऽर्थे—सन्ति पुरुषा अतीन्द्रियार्थदृश इतीष्ट स्यात् । प्रत्यक्षपूर्वकाणां प्रमाणानामतद्दर्शनेऽसंभवात् । प्रत्यक्षावृत्तेर्हि तेषु प्रमाणान्तरस्याऽसंभवात् । अनदालम्बनप्रतीतये प्रमाणमागम । प्रमाणान्तरवृत्तिस्तु प्रत्यक्षमन्वावर्पयतीति न पुरुषातिशयो निवार्य स्यात् । तस्मान्नास्त्यतीन्द्रियेषु प्रमाणान्तरवृत्ति ॥

अत एवागमस्यार्थविशेषवृत्तेरपरिज्ञानादय जैमिनिरन्यो वा

**स्वयं रागादिमान्नार्थं वेत्ति वेदस्य नान्यतः ॥३२०॥**
**न वे[38a]दयति वेदोऽपि वेदार्थस्य कुतो गति ।**

सर्व एव हि पुरुषोऽनतिक्रान्तबोधविप्लवस्तमतीन्द्रियमर्थविशेषप्रतिनियम व्याख्यां वा स्वय न वेत्ति नाप्येनमन्यो वेदयति, तस्यापि तुल्यप्रसङ्गात् । न ह्यन्धेनाकृष्यमाणोऽन्ध पन्थान प्रतिपद्यते । नापि वेद स्वार्थं विवृणोति, उपदेशवैयर्थ्यप्रसङ्गात् । तदयमपरिज्ञातार्थं शब्दपशुरेव शल्यभूतोऽसद्दर्शनस्नायूपनिबद्धो दुरुद्धरो दु खमासादयति ॥

**स्वेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुतौ ॥३२१॥**
**खादेच्छ्वमांसमित्येष नार्थं इत्यत्र का प्रमा ।**

क्वचिदप्यर्थे प्रत्यासत्तिविप्रकर्षरहितस्य "अग्निहोत्रं जुहुयात स्वर्गकाम "[मैत्री० ६ ३६] इत्यादिवाक्यस्य 'भूतविशेषे यथाभिमत घृतादि प्रक्षिपेत्' इत्ययमर्थो न पुन 'श्वमांस खादेत्' इति नातिशय पश्याम ।

नन्वय सर्वत्र समान प्रसङ्ग परोक्षदेशिकाना वचनानामर्थ यथाभिप्रायमिदानीन्तना समनुयन्ति आहोस्विद्विपर्ययमिति । न । उपदेष्टु स्वाभिप्रायप्रकाशनेन सम्प्रदायसंभवात् । न ह्ययमदेशिकाना संभवति । लोकप्रत्यायनाभिप्रायश्च ब्रुवाणो लोकमनेनप्रसिद्धिमनुपालयतीति ततोऽपि तदर्थसिद्धि स्यात् । नापौरुषेयाणां शब्दानाम्, तत्र कस्यचित् समीहाभावात् ।

अपि च—न्यायमेवानुपालयन्त पण्डिता हेयोपादेयतदाश्रयेषु सघटन्ते, न प्रयादेशेनेति न समान प्रसङ्ग । तच्च यथावसर प्रतिपादयिष्याम ॥

ननु यश्चित्कल्लोकसंनिवेशादिरयुक्तिविपक्षोऽपि संभावनीयपुरुषवचनादर्थ प्रतिपद्यते । । अप्रत्ययात् । न हि क्वचिदस्खलित इति सर्वं तथा, व्यभिचारदर्शनात्, तत्प्रवृत्तेरनिमवादेन ध्यापयराद्धेश्च । अन्यथा वेदमागमलक्षणमिष्टम् । नानोऽर्थनिश्चय. । तत्र प्रमाणमागम इत्यप्युक्तम् ।

अपौरुषेयाणां शब्दानामर्थज्ञान न सम्प्रदायाश्च युक्तेर्न लोकादिति तत्राऽप्रतिपत्तिर्न्याय्या ॥

**प्रसिद्धो लोकवादश्चेत्**

**प्रतिपत्तिहेतु**[1] ।

---

[1] एतत्पर्यन्त तिब्बतीभाषातोऽनूदित श्रीराहुलसांकृत्यायनेन स्वसंपादितवृत्तौ ।

तत्र कोऽतीन्द्रियार्थदृक् ॥३२२॥

अनेकार्थेषु शब्देषु येनार्थोऽयं विवेचितः ।

न ह्ययं लोकव्यवहारोऽपौरुषेयाच्छब्दार्थसम्बन्धात् । किं तर्हि ? समयात् स्वदारसंस्कारसमयात् पाणिनीयादिव्यवहारवदुपदेशापेक्षणात् । न ह्यपौरुषेये तस्मिन्नुपदेशो युक्तः, तस्य केनचिदज्ञानात्, अतीन्द्रियत्वात् । ऐन्द्रियकत्वे स्वयं प्रतिपत्तिप्रसङ्गात् । रूपादिवत् । उपदेशे च पुरुषाणां स्वतन्त्राणां यथातत्त्वमुपदेशेनाऽविसंवादस्याऽसिद्धेरनाश्वासः ।

वेदवद् व्याख्यानमप्यनाद्यपौरुषेयं सम्प्रदायाऽविच्छेदादागतं ततोऽर्थसिद्धिरिति चेत् । तस्यापि शब्दात्मके तुल्यः पर्यनुयोगः—कथमस्यार्थो वेदितव्य इति । पुरुषो हि स्वयं समितानां शब्दानामर्थं शुश्रूषाहिकयाऽपि तावदबुधं बोधयेदित्यस्ति पौरुषेयाणामर्थगतौ उपायः । अपौरुषेयस्तु शब्दो नैव करोति । न चास्य कश्चित् क्वचित् सम्बन्धनियमं ज्ञातुमीष्टे स्वयमप्रतिपत्तिरेव तदर्थस्य ।

अपि च वेदस्तद्व्याख्यानं वा पुरुषेण पुरुषायोपदिश्यमानमनष्टसम्प्रदायमेवानुवर्तेत इत्यत्रापि समयः शरणम्, आगमभञ्जकारिणामाहोपुरुषिकया, तद्दर्शनविद्वेषेण वा, तत्प्रतिपक्षाङ्गीकाराय धूर्तव्यसनेन, अन्यतो वा कुतश्चित् कारणादन्यथारचनादर्शनात् ।

अपि चात्र भयात् स्वमेव सुस्वर्णं स्वबालानुरागाभूत विस्मृतत्वात् 'पुरुषो रागादिभिरुपप्लुतोऽनृतमपि ब्रूयादिति नास्य वचनं प्रमाणम्' इति । तदिहापि किं न प्रत्यवेक्ष्यते सम्भवति न वेति ? स एवोपदिशन्नुपप्लवाद्वेदं वेदार्थं वान्यथाऽप्युपदिशेदिति । श्रूयन्ते हि कैश्चित् पुरुषव्यसनोद्धृतानि शाखान्तराणीदानीमपि कानिचिद्विरलाध्येतृकाणि । तद्वत् प्रचुराध्येतृकाणामपि कस्मिंश्चित् काले कयाचित् संहारसम्भवात् । पुनः सम्भावितपुरुषप्रत्ययात् प्रचुरतोपगमनसम्भावनासम्भवात् । तेषां च पुनः प्रतानयितृणां कदाचिदधीतविस्मृताध्ययनानामन्येषां वा सम्भावनाभ्रमभयादि[38b]नाऽन्यथोपदेशसम्भवात् । तत्प्रत्ययाच्च तद्भक्तानामविचारेण प्रतिपत्तेर्बहुष्वध्येतृषु सम्भावितात् पुरुषात् बहुलं प्रतिपत्तिदर्शनात् । ततोऽपि कथञ्चिद्विप्रलम्भसम्भवात् ।

किं च परिमितव्याख्यातृषु पुरुषपरम्परामेव चात्र भवतामपि शृणुमः । तत्र कश्चिद् दुष्टाशयवृत्तीनामन्यतमः स्यादपीत्यनाश्वासः ।

तस्मान्नापौरुषेयाद्व्याख्यानात्, नापि सामयिकाल्लोकव्यवहाराद्वेदार्थसिद्धिः । असामयिकत्वेऽपि नानार्थानां शब्दानां व्यवहारे दर्शनात् कस्यचिदप्रसिद्धार्थस्याप्रसिद्धस्य वा पुनः व्युत्पत्तिदर्शनेन सर्वत्र तदाशङ्काऽनिवृत्तेः । सर्वेषां यथार्थनियोगेऽप्यवैगुण्येन यथासमयं प्रतीतिजननात्, इष्टानिष्टयोरविशेषात् । अविशिष्टानां सर्वार्थेष्वेकमर्थमत्यक्षसंयोगमनत्यक्षदर्शिनि पुरुषसामान्ये को विवेचयेद्यतो लोकात् प्रतीतिः स्यात् ॥

अपि च—स्वयमप्ययं न सर्वत्र प्रसिद्धिमनुसरति । यस्मात्—

स्वर्गोर्वश्यादिशब्दश्च दृष्टोऽदृष्टार्थवाचकः ॥३२३॥

अनेनैव निर्वर्ण्यमानः । मनुष्यातिशायिपुरुषविशेषनिकेतोऽतिमानुषसुखाधिष्ठानो नानोपकरणः स्वर्गः । तन्निवासिन्यप्सरा उर्वशीनामेति लोकवादः । तमनादृत्यान्यामेवार्थकल्पनामयं कुर्वाणः शब्दान्तरेषु कथं प्रसिद्धिं प्रमाणयेत् ।

तत्राविरोधादभ्युपगम इति चेत् । न । अत्राप्यतीन्द्रिये विरोधाऽसिद्धेः । अन्यत्राप्यविरोधस्य दुरन्वयत्वात् । विरुद्धामप्यग्निहोत्रात् स्वर्गावाप्तिं मान्द्यादयं न लक्षयेदपि । विरोधाविरोधौ च बाधकसाधकप्रमाणवृत्ती । ते चात्यक्षे नाभिमते । तत् कथं तद्वशात् तत्प्रतीतिः ।

न च वचनवृत्तिरेवाऽविरोधोऽन्यथापि प्रसङ्गात् । अपौरुषेय आगमस्तस्य प्रवादादर्थसिद्धिः । तत्र पुनर्विरोधचिन्तायामनाश्वासः आगमे स्यात् । सत्यपि तस्मिन्सतमाभावादर्थस्याप्रमाणवृत्तेरन्यस्यापि शङ्कनीयत्वात् ॥

यदुक्तम्—"अग्निहोत्रं जुहुयात् स्वर्गकामः" [मैत्री ६ ३६] इत्यत्र श्वमांसभक्षणचोदनाविकल्पो भवत्विति—स न भवति प्रदेशान्तरेषु तथार्थस्य वचनात् । न । तस्यार्थाऽपरिज्ञानात्, प्रदेशान्तरेष्वपि तथाविधार्थकल्पनाया अनिवार्यत्वात् । यदि हि क्वचिद्विदितार्थोऽप्यपौरुषेयः शब्दराशिः स्यात्तदा ततोऽर्थप्रतीतिः स्यात् । ते तु बाहुल्येऽप्यन्धा एव सर्वं इति यथेष्टं प्रणीयन्ते । •

तस्मात्—

शब्दान्तरेषु तादृक्षु तादृश्येवास्तु कल्पना ।

यादृशी—"अग्निहोत्रं जुहुयात् स्वर्गकामः" [मैत्री० ६ ३६] इत्यस्य वाक्यस्य ॥

अपि च—

प्रसिद्धिश्च नृणा वादः प्रमाणं स च नेष्यते ॥३२४॥

ततश्च भूयोऽर्थगतिः[1] किमेतद् द्विष्टकामितम् ।

न प्रसिद्धिर्नामान्या, अन्यत्र जनप्रवादात् । ते च सर्वे जना रागाद्यविद्यापरिगतत्वादसम्भावनीययाथात्म्यवचना । तदेषा प्रवादो न प्रमाणम् । न हि कस्यचिदपि सम्यक्प्रतिपत्तेरभावे बाहुल्यमर्थं नद्भवति । पारसीकमातृमैथुनाचारवत् । तेषामेव पुरुषाणां वचनात् पुनः परोक्षार्थप्रतिपत्तिरिति तदेव कथं युगपद् द्वेष्यं च काम्यं च ?

अथ[1] प्रसिद्धिमुल्लङ्घ्य कल्पने न निबन्धनम् ॥३२५॥

प्रसिद्धेरप्रमाणत्वात् तद्ग्रहे किं निबन्धनम् ।

प्राप्तप्रतिलोमनेनाऽन्यत्र प्रवृत्तिर्गुणदोषदर्शनेन युक्तेति प्रसिद्धेरन्वय इति चेत् । न । प्राप्ते प्रमाणवृत्तिलक्षणत्वात् । यत् किंचन ग्रहणं हि प्रसिद्धिमप्रमाणयतस्तन्मुखेन प्रतीतिः । न्याय्यात् प्राप्तिप्रतिषेधातुल्या स्वपरविकल्पयोरुभयथापि वृत्तिरिति न प्रसिद्धावनुरोधः ॥

---

[1] अर्थं—क०

अपि चेयम्—

उत्पादिता प्रसिद्ध्यैव शङ्का शब्दार्थनिश्चये ॥२२६॥
यस्मान्नानार्थवृत्तित्वं शब्दानां तत्र दृश्यते ।

न प्रसिद्धेरेकार्थनिश्चयः शब्दानाम्, तत एव शङ्कोत्पत्तेः । नानार्था हि शब्दा लोके दृश्यन्ते । लोकवादश्च प्रतीतिः । अत एव नानार्थत्वेति ततोऽर्थनियमो न युक्तः ॥

अन्यथाऽसंभवाऽभा[39a]वान्नानार्थत्वे स्वयं ध्वनेः ॥२२७॥
अवश्यं शङ्कया भाव्यं नियामकमपश्यताम् ।

अन्तरश्लोकः ॥

तस्मादविदितार्थविभागेषु शब्देष्वेकमर्थमत्यन्तपरोक्षमनालम्ब्य नसमारोप्य विनिश्चित्य व्याचक्षाणो जैमिनिस्तदुपायेन स्वमेव मतमाहेति न तीर्थकरान्तरादस्य विशेषं पश्यामः । तथा हि—तदर्थवचनव्यापारशून्यस्य तत्समारोपेणाभिधानं न स्ववचनमि(म)तिशेते । तत्कारिणा केवलं मिथ्या विनीतेनैवात्मन समुद्घोषितं स्यात् । तथा हि—

एष स्थाणुरयं मार्ग इति वक्तीति वदन्न ॥२२८॥
अन्यः स्वयं ब्रवीमीति तयोर्भेदः परीक्ष्यताम् ।

गिरनिमित्तव्यापारवचने व्याख्याने समारोप्यार्थविशिष्टव्याख्यातुः स्वयं वा स्वयं वचनोपगमे न कश्चिद्विशेषोऽन्यत्र वक्तुः प्रतिपत्तिमात्रात् ॥

अपि चैकार्थनियमे सति एव जैमिनिदर्शितानाम् । स एव शब्दस्य—

सर्वत्र योग्यस्यैकार्थयोगित्वे नियमः कुतः ॥२२९॥

न हि शब्दस्य कश्चिदर्थे स्वभावनियमः, सर्वत्र योग्यत्वात् । यद्योग्यत्वे च सत्यप्यु- पेतविशेषस्य पुरुषाणां कदाचिदुपलम्भानुपलम्भाज्ञानात् ।

तथा वातीन्द्रिया येन विवक्षावचनादृते ।

पुरुषप्रणीते हि शब्दे यथाचिद्विवक्षा न वा कदाचित् कश्चिद्विरोधेऽपीति विवक्षा- पूर्वकाणां शब्दानामर्थनियमः प्रतीयेतापि । अपौरुषेये तु विवक्षाऽभावान्नियमः कुत इत्येव ? स्वभावभेदस्याभावात् । सति वा, [illegible] । [illegible][1] कश्चित् ज्ञातुमशक्यत्वात् । न चास्ति कश्चिद्विशेषः । सर्वज्ञा हि [illegible] ॥

ततस्तेषाम्

विवक्षा नियमे हेतुः संकेतस्तत्प्रकाशनः ॥२३०॥
अपौरुषेये सा नास्ति तस्य संकेतः कुतः ।

[1] अप्रत्यक्षत्वे—क०

विवक्षया हि शब्दोऽर्थे[१] नियम्यते, न स्वभावतः, तस्य क्वचिदप्रतिबन्धेन सर्वत्र तुल्यत्वात् । यत्रापि प्रतिबन्धस्तदभिधाननियमाऽभावात्, सर्वशब्दे वर्णानामभिधानप्रसङ्गात् । तस्माद्विवक्षाप्रकाशनायाऽभिप्रायनिवेदनलक्षणः सङ्केतः क्रियते । अपौरुषेये तु न विवक्षा, न सङ्केतः, कस्यचिदभिप्रायाऽभावादिति न नियमो न तज्ज्ञानम् ॥

स्वभावनियमेऽन्यत्र न योज्येत तया पुनः ॥३३१॥

यदि सङ्केतनिरपेक्षः स्वभावत एवार्थेषु शब्दः, न[२] नियमः स्यात् । उक्तमनाऽप्रतिबन्धादनियम[३] इति ॥

अपि च । स्वाभाविके वाच्यवाचकभावे न पुनर्विवक्षया,

यथेष्टं न नियुज्येत सङ्केतश्च निरर्थकः ।

स्यात् । न हि स्वभावभेद इन्द्रियगम्यः स्वप्रतीतौ परिभाषादिकमपेक्षते । नीलादिभेदवत् । तदपेक्षप्रतीतयस्तु न वस्तुस्वभावाः । किं तर्हि ? सामयिकाः राजचिह्नादिवत् । यश्च सामयिकः स स्वभावनियतोऽयुक्तस्तस्येच्छावृत्तेः । अत एव सङ्केताद् स्वभावविशेषस्य व्यक्तौ नियमः कुतः ? स्वेच्छावृत्तिः सङ्केतः । स इहैव कर्तुं शक्यते नान्यत्रेति नोपरोधोऽस्ति । स च पुरुषैः स्वेच्छया क्रियमाणस्तमेव स्वभावं व्यनक्ति नार्थमिति न नियमोऽस्ति ॥

यत्र स्वातन्त्र्यमिच्छायाः नियमो नाम तत्र कः ॥३३२॥

पौरुषेयेण सङ्केतो भेदस्तेनैव शक्यताम् ।

इत्यन्तरश्लोकः ॥

यस्मात् क्लिन्नेदृशं सत्यं यथाग्नि श्रीतनोदनः ॥३३३॥

वाक्यं वैदिकदेशत्वादन्यदप्यपरोऽब्रवीत् ।

अन्यस्त्वपौरुषेयमागमलक्षणं परित्यज्यान्यथा प्रामाण्यं वेदस्य साधयितुकाम प्राह—अभिमतानि वेदवाक्यानि यथाप्रतिपत्ति, वेदैकदेशत्वात् । यथा "अग्निर्हिमस्य भेषजम्" [तैत्ति० सं० ७ ४ १८ २] इत्यादि वाक्यमिति ॥

तस्येदम्

रक्तवस्तुल्यरूपत्वादेकभाण्डे च पाकवत् ॥३३४॥

दोषवद्व्यभिचारित्वात् क्षिप्तं न्यायविदेदृशम् ।

स्वयमीदृशमाचार्येणानुमानं नैयायिकानां यच्छेषवदनुमानं तस्य व्यभिचारमुद्भावयता यथा तुल्यरूपतया फलानां तुल्यरससाध[39b]नवदेकस्थाल्यन्तर्गमात् दृष्टवददृष्टतन्दुलपाकसाधनवच्चासाधनमुक्तम् । तदसाधनत्वे न्यायश्च पूर्वमेवोक्तः । उक्तं चेद[मागमलक्षणमस्मा]भि । तत्तु सर्वस्य शास्त्रविचारस्य विषयस्य यथास्वं प्रमाणेन विधिप्रतिषेधसिद्धौ

---

[१] र्थेषु—क० [२] ०र्थेषु शब्दो भिलीनः स्यात्—क० [३] ०नियत—क०

नान्तरीयकत्वाभावेऽपि शब्दानामर्थेषु वर संशयितस्य वृत्तिस्तत्र कदाचिदविसंवादस्य संभवात् । न त्वन्यत्र दृष्टप्रमाणोपरोधस्य पुरुषस्य प्रवृत्तिरिति ॥

य पुन प्राकृतविषयस्य वह्नेः शीतप्रतिघातसामर्थ्यस्याभिधानं सत्यार्थमुपदर्श्य सर्वं सत्यार्थमाह शास्त्र शक्यपरिच्छेदेऽपि विषये प्रमाणविरोधाद् बहुतरमयुक्तमपि

नित्यस्य पुंसः कर्तृत्वं नित्यान्भावानतीन्द्रियान् ॥२३५॥

ऐन्द्रियान् विषम हेतुं भावानां नियतां स्थितिम् ।
निर्वृत्ति च प्रमाणाभ्यामन्यथा व्यस्तगोचरम् ॥२३६॥

विरुद्धमागमापेक्षेणानुमानेन वा वदत् ।
विरोधमसमाधाय शास्त्रार्थं चाप्रदर्श्य सः ॥२३७॥

सत्यार्थं प्रतिजानानो जयेद्धाष्ट्र्येन बन्धकीम् ।

अप्रच्युतानुत्पन्नपूर्वापररूप पुमान् कर्ता कर्मेण कर्मणा कर्मफलाना च भोक्ता समवायिकारणाधिष्ठानभावादिनेत्याह वेद । तच्चायुक्तमित्यावेदितप्रायम् । नित्यत्व च केषाञ्चिद्भावानामक्षणिकस्य वस्तुधर्मातिक्रमादयुक्तम् । अप्रत्यक्षाण्येव सामान्यादीनि प्रत्यक्षाणि । जन्मस्थितिनिवृत्तीश्च नियमा पदार्थानाम् । अनाधेयविशेषस्य प्रागकर्तुं परापेक्षया जनकत्वम् । निष्पत्तेरकार्यरूपस्याश्रयवशेन स्थानम् । कारणाच्च विनाश इत्यादिकमन्यदपि प्रत्यक्षानुमानाभ्यां प्रसिद्धविपर्ययमागमाश्रयेण चानुमानेन बाधितमग्निहोत्रादे पापशोधनसामर्थ्यादिकम् । तस्यैववादिनो वेदस्य सर्वस्य शास्त्रशरीरे प्रमाणविरोधमप्रतिसमाधाय सबन्धानुगुणोपायपुरुषार्थाभिधानानि च शास्त्रधर्मानप्रदर्श्यात्यन्तप्रसिद्धविषयसत्याभिधानमात्रेण प्रज्ञाप्रकर्षपङ्कुरवगाहगहनेऽपि निरत्ययिता साधयितुकामो बन्धकीमपि प्रागल्भ्येन विजयते ।

काचित् किल बन्धकी स्वय स्वामिना विप्रतिपत्तिस्थाने दृष्टोपालब्धा । सा त मत्युवाप—पश्यत भात पुरुषस्य वैपरीत्य मयि धर्मपत्न्या प्रत्ययमकृत्वात्मीययोर्नेत्राभिधानयोर्जलबुद्बुदयो करोति । [तिन अर]त्कापेन ग्रामकाष्ठहारकेण प्रार्थितापि न संगता । रूपगुणानुरागेण किल मन्त्रिमुख्यदारक कामयेऽहमिति ।

एव जातीयकमेतदपि वह्ने शीतप्रतीकारवचनेन दृष्टप्रमाणविरोधस्याप्यसमत्तपरोक्षेऽर्थेऽविसंवादानुमानम् ॥

सिध्येत् प्रमाण यद्येवमप्रमाणमथेह किं ॥२३८॥
न ह्येक नास्ति सत्यार्थं पुरुषे बहुभाषिणि ।

यथेदमतिदुष्करमत्यन्तसत्याभिधान तथात्यन्ताऽसत्याभिधानमपि । तत्रैकस्य वचनस्य कथंचित् संवादेनाऽव्यभिचारिणस्य तद्वचनराशेस्तथाभावे न कश्चित् पुरुषोऽनाप्त स्यात् ॥

अपि च ।

नाम स्वभाव कार्यं वा वस्तुनो वक्तरि ध्वनि. ॥२३९॥

न च तद्व्यतिरिक्तस्य विद्यतेऽव्यभिचारिता ।

न तावदेतद्वचन वाच्याना स्वभावो नाप्येषा कार्यम्, तदभावेऽपि वक्तुर्विवक्षामात्रेण भावात्। न चान्य कश्चित् कस्यचिदव्यभिचारी । व्यभिचारे च ततोन्यथापि तत्सभवात् तद्भावात्तत्प्रतीतिरयुक्ता ॥

प्रवृत्तिर्वाचकानां च वाच्यदृष्टिकृतेति चेत् ॥३४०॥

स्यादेतत् कार्यमेव वचन वाचकस्य वाच्यदर्शनवृत्ते ॥

एव सति

परस्परविरुद्धार्था कथमेकत्र सा भवेत् ।

यद्येव प्रतिनियमो वाच्य वस्त्वन्तरेण शब्दो न प्रवर्तेत इति । भिन्नेषु प्रवादेष्वेकत्र वस्तुनि विरुद्धस्वभावोपसहारेण वचनवृत्तिर्न स्यात्। न ह्येव सभवाऽस्ति एक शब्दो निम्मर्याप [40a] नित्यश्च स्यादनित्यश्चेति ॥

वस्तुभिर्नागमास्तेन कथंचिन्नान्तरीयका ॥३४१॥
प्रतिपत्तु प्रसिध्यन्ति कुतस्तेभ्योऽर्थनिश्चय ।

आगम प्रमाण सदादर्शितार्थप्रतिपत्तयेऽसौ जन समन्वेषते । समधिगतयाथात्म्यानामुपदेशाऽनपेक्षणात्, अज्ञस्य चातीन्द्रियगुणपुरुषविवेचनऽसामर्थ्यात् वचनाना समीहितार्थसत्तामन्तरेणाऽपि वृत्ति पश्यतो अवितथ्यमेवादृष्टव्यभिचारवचसामपि पुरुषाणा वाचि शङ्का—कि यथार्था नेति । तेन न युक्तमनेन कस्यचिद्वचनेन किंचिन्निश्चेतुम् ॥

तस्मान्न निवृत्त्यापि भावाऽभाव प्रसिध्यति ॥३४२॥

यदुक्त सर्वविषयत्वादागमस्य सति वस्तुन्यविसंवादेनास्य वृत्तेस्तन्निवृत्तिलक्षणानुपलब्धिरभाव साध[1]यतीति । तदस्य सर्वविषयत्वेऽपि वस्त्वन्तरेणावृत्तौ स्यात् । तच्च नास्ति । तत प्रतिपत्तृणामस्याऽसिद्धिरित्ययुक्तम् ॥

तेनासन्निश्चयफलानुपलब्धिर्न सिध्यति ॥३४२½॥

तस्मादत्र प्रमाणत्रयनिवृत्तावपि विप्रकृष्टेष्वभावनिश्चय ॥

वेदप्रामाण्य कस्यचित् कर्तृवाद स्नाने धर्मेच्छा जातिवादावलेप ।
सन्तापारम्भ पापहानाय चेति ध्वस्तप्रज्ञाने पञ्चलिङ्गानि जाड्य ॥

प्रमाणवार्त्तिके प्रथम परिच्छेद ॥छ॥ लेखकपाठकयो शुभम् ॥

---

[1] साधयिष्यतीति—क०

# टिप्पणानि ।

पृ० १ का० १ 'विधूत'०—आचार्यमनोरथनन्दिना कारिकैया प्रमाणसिद्धिपरिच्छेदे प्रथमकारिकात्वेन सम्मता । उद्धृता—प्रमेयक० पृ० ३४ । स्या० र० पृ० ८५ ।

पृ० १. का० २ 'प्राय'—इयमपि कारिका आ० मनोरथनन्दिना प्रमाणसिद्धिपरिच्छेदे-ऽन्तर्भाविता द्वितीयकारिकात्वेन ।

पृ० १ प० १२ 'अर्थानर्थं०' इत्याद्युत्थानवाक्यमुद्धृतम्—अष्ट० पृ० २३४, सन्मति० टी० पृ० ४६९ ।

पृ० १ का० ३ 'पक्षधर्म'—कारिकेयं धर्मकीर्तिना हेतुबिन्दौ ग्रन्थार्थसंग्राहिकात्वेन संस्थाप्य व्याख्याता विस्तरेण । प्रारम्भिकं च व्याख्यानमस्या अत्र या वृत्तिमनुसरति—हेतु० पृ० ५२–५३, हेतु० टी० पृ० ३–२० । उद्धृता—त० श्लो० पृ० २१२ । सन्मति० टी० पृ० ५५६ ।

पृ० १ पं० १५ 'प्रयोजनाभावादि'त्याक्षेप ईश्वरसेनस्येति—हेतु० टी० पृ० ११। क० टी० पृ० १२ ।

पृ० १ प० २० 'सजातीय' अत्र दिङ्नागस्यैषा कारिका अनुसर्तव्या—

"तत्र यः सन् सजातीये द्वेधा चासंस्तदत्यये ।
स हेतुर्विपरीतोऽस्माद्विरुद्धोऽन्यस्त्वनिश्चितः ॥"

प्रमाणसमुच्चयतृतीयपरिच्छेदे न्यायमुखे (का० ७) चान्तर्भूतेति । क० टी० पृ० १४; हेतु० टी० पृ० १३ । न्याय० ता० पृ० १९८, हिस्ट्री० इ० लो० पृ० २४३, इ० लो० भा० १ पृ० ३२१, प्र० मी० टि० पृ० १४२ ।

पृ० १ प० २४ 'आक्षेप्स्याम'—प्र० वा० ४ १९० ४

पृ० २ प० ८ 'वक्ष्याम'—का० ४२-१८८

पृ० २ पं० ८ 'सर्व एव'—वाक्यमेतत् आचार्यदिङ्नागस्य—क० टी० पृ० २४, न्याय० ता० पृ० ३९; श्लो० ता० पृ० २३१, स्या० मं० का० ७ । अष्ट० पृ० १४६; अनेकान्तज० भा० १ पृ० ३३१; सन्मति० टी० पृ० ५६४

पृ० २ प० १५ 'सर्वथा'—विशेषार्थिना द्रष्टव्यमत्र—हेतु० पृ० ६३, हेतु० टी० पृ० १८, १५०; क० टी० पृ० २६ ।

पृ० २ का० ४ 'कार्यम्' द्रष्टव्यम—हेतु० पृ० ६३, हेतु० टी० पृ० १५१ ।

पृ० २ का० ४ 'हेतु' उद्धृतोऽयमत्र—ईश्वर० वि० भा० ३ पृ० २०० ।

पृ० २ प० २१ 'अशेन'—द्रष्टव्यम्—हेतु० पृ० ६३; हेतु० टी० पृ० १५२ ।

पृ० ३ प० ८ 'अनवस्थानात'—द्रष्टव्यम्—प्र० वा० ४ २७५ ।

पृ० ३ प० ११ 'मोहात'—द्रष्टव्यम—प्र० वा० ४ २६३,२६७ ।

पृ० ४ का० ८ 'इष्टम्'—उद्धृतेयं—न्याय० वि० भा० २ पृ० १८९, ईश्वर० वि० भा० १ पृ० २०२।

पृ० ४ का० ९ 'हेतुना' उद्धृतेयम्—न्यायम० भा० १ पृ० ११६; न्याय० वि० भा० १ पृ० ४८८, भा० २ पृ० २००, न्याया० वृ० पृ० ६४। स्या० र० पृ० ५८६, सन्मति० टी० पृ० ५६३।

पृ० ५ का० ११ 'एक०' उद्धृतेयम—न्याय० ता० पृ० १०७, न्याय० वि० भा० १ पृ० ४८७, भा० २ पृ० १९७, न्यायकु० पृ० २३६, तत्त्वम० पृ० ४१७। सन्मति० टी० पृ० ५५९, ईश्वर० वि० भा० २ पृ० १३३, ईश्वर० वि० भा० ३ पृ० १९७।

पृ० ५ का० १२ 'अतीतैक०' उद्धृतेयम्—न्यायकु० पृ० ४५९, प्रमयक० पृ० ३८१, स्या० र० पृ० ५९०।

पृ० ६ प० ६ 'निवेदयि०' द्रष्टव्यम्—प्र० वा० १ १९५ त।

पृ० ६ प० ९ 'कश्चयापि' अस्य पक्षस्य समालोचनार्थं द्रष्टव्या-अष्ट० पृ० २८३।

पृ० ७ का० १७ 'हेतो' उद्धृतेयम्—त० श्लो० पृ० २०३, प्रमाणप० पृ० ७२; प्रमेयक० पृ० ३५४, न्यायकु० पृ० ४३६, स्या० र० पृ० ५१८, न्याय० वि० भा० १ पृ० ५११; बृहदा० वा० प० १५२१

पृ० ७ का० १७ 'वर्णित आचार्यदिङ्नागेनेति प्रप—क० टी० पृ० ५७, म० टी० पृ० २९२।

पृ० ७ प० १६ 'एष' इत्यादि वाक्य दिङ्नागस्य न्यायमुखे—क० टी० पृ० ५८, म० टी० पृ० २९२।

पृ० ७ का० १९ 'नास्तीति' अत्र 'विपक्षे हेतुर्नास्तीति' इति दिङ्नागवाक्यमभिप्रेतम्—क० टी० पृ० ६०।

पृ० ८ प० ८ 'इत्यके' अत्र ईश्वरसेनादय अभिप्रेता—क० टी० ६१।

पृ० ८ प० १९ 'नेद निरात्मकम्' अत्र विशार्थिना द्रष्टव्यम्—न्यायवा० पृ० ४६, ९२—१२३। प्र० वा० ४ २०८, न्यायबिन्दु ३ ९७—१०८, प्र० मी० टि० पृ० ८६, बृ० स्लो० भा० १ पृ० ३३८, भा० २ पृ० २०८।

पृ० ८ प० २२ 'तथा सपक्षे' इत्यादि वाक्य दिङ्नागस्य—क० टी० पृ० ६३, म० टी० पृ० २९३।

पृ० ८ प० २६ 'य एव' इत्यादि वाक्य दिङ्नागस्य—क० टी० पृ० ६४।

पृ० ९ प० १२ 'विरुद्धा०' आचार्यदिङ्नागेन कथ विरुद्धाव्यभिचारिहेत्वाभासो वर्णित इत्यत्राक्षेप। न्यायबिन्दु ३ ११०—१२०। विशेषार्थिना द्रष्टव्य न्यायवा० पृ० १३, १६९, श्लो० अनु० ९१ त।

पृ० ९ प० १५ 'यदादर्शन'० इत्यादिवाक्य दिङ्नागस्य—म० टी० पृ० ६६; म० टी० पृ० २९४।

पृ० ९ प० २० 'आचार्यीय' आचार्यस्य शिष्य इत्यर्थ — क० टी० पृ० ६८; म० टी० पृ० २९५।

पृ० १० प० १४ 'अनुपलम्भ' अत्र वैशेषिक आक्षिप्यते आचार्येण—क० टी० पृ० ७२, म० टी० पृ० २९५।

पृ० १० प० १८ 'प्रत्यक्षलक्षण' चार्वाकोऽत्राभिप्रेत —क० टी० पृ ७३।

पृ० १०, प० १९ 'कश्चित्' चार्वाकोत्र विवक्षित — क० टी० पृ० ७३।

पृ० १० प० २० 'अपर' साङ्ख्योऽत्राभिप्रेत —क० टी० पृ० ७४।

पृ० १० का० २५ 'तस्मात्'—उद्धृतेय—न्याय० वि० भा २ पृ० १९८। सन्मति० टी० पृ० ५५१।

पृ० ११ का० २८ 'तस्मात'—उद्धृतेयम्—न्यायक० पृ० २०२।

पृ० ११ का० २९ 'तद्भाव'—उद्धृतेयम—न्याय० वि० भा० २ पृ० २३७, २४१।

पृ० ११ का० २९ 'विदुषाम्' उद्धृतोऽयमत्र —त० श्लो० पृ० ३, न्याय० वि० भा० २ पृ० १७८, न्याया० वृ० पृ० १०३, स्या० र० पृ० ९६७।

पृ० ११ प० २६ 'यदय' अशुद्धमेतत्। यदयं इति शुद्धम्।

पृ० ११ प० २७ 'प्रतिक्षिपति' 'आचार्यदिङ्नाग न्यायमुखे इति शेष।

पृ० १२ प० ३ 'अर्थात्मत्या' इत्यादि वाक्य न्यायमुख आचार्यदिङ्नागस्य।

पृ० १२ प० ४ 'आह' आचार्यदिङ्नाग इति शेष।

पृ० १३ प० ७ 'प्राक्'—का० ५—८।

पृ० १३ का० ३३ 'कार्य०'—उद्धृतेयम—न्याय० ता० पृ० १०५ न्यायक० पृ० २०७, न्याय० वि० भा० १ पृ० ५०१, भा० २ पृ० १८०, न्याया० वृ० पृ० १०३, प्रकरण० पृ० ६५, सन्मति० टी० ७६, ५५८

प० १३ का० ३४ 'अवश्य' उद्धृतेयम्—सन्मति० टी० पृ० ७६, ५५९।

पृ० १३ प० १६ 'अयमेव' इत्यादि वाक्य उद्धृतम—हेतु० टी० पृ० ४७, सन्मति० टी० पृ० ३, अनेकान्तज० भा० १ पृ० २६२, स्या० म० का० ५, न्याया० वृ० पृ० ३८। सन्मति० टी० पृ० ३, ३२७

पृ० १३ प० २२ 'वक्ष्याम'—का० ६७—६९। विशेषत पृ० २८ द्रष्टव्यम्।

पृ० १४ का० ३६ 'कार्यम्' उद्धृतेयम्—प्रमेयक० पृ० ३५०, न्याय० वि० भा० २ पृ० १०१, २५३। स्या० र० पृ० ५१५, सन्मति० टी० पृ० ५७, ५८, ३२२, ५६९।

पृ० १४ का० ३७ 'नित्यम्'—उद्धृतेयम्—न्याय० ता० पृ० १०७, न्याया० वृ० प० ४७, प्रकरण० पृ० ६६, अने० वृ० भा० १ पृ० १४५; सन्मति० टी० पृ० ६९, ७४।

पृ० १५ प० ३८ 'अग्नि०' उद्धृतेयम्—प्रमेयक० पृ० ५१३, न्याय० वि० भा० २ पृ० १०१, १८६, २५४, स्या० र० पृ० ८२०, सन्मति० टी० पृ० ५०।

पृ० १५ का० ३९ 'धूम०' उद्धृतेयम्—न्याय० वि० २ १८६; ईश्वर० वि० भा० ३ पृ० २२१

पृ० १५ का० ४० 'अन्वय०' उद्धृतेयम्—त० श्लो० पृ० ७७; अष्ट० पृ० १५।

पृ० १५ का० ४१ 'स्वभावे' उद्धृतेयम्—प्रमेयक० पृ० ३५०। सन्मति० टी० पृ० ३२१, ५६९

पृ० १६ का० ४२ 'सर्व' उद्धृतेयम्—सन्मति० टी० पृ० २४३, अष्ट० पृ० १७३; प्रमेयक० पृ० ४८०, न्याया० वृ० पृ० ९८,—अनेकान्तज० भा० १ पृ० ३३३, अने० वृ० भा० १. पृ० ६३, स्या० र० पृ० ८०७

पृ० १६. का० ४३. 'तस्मात्' उद्धृतेयम्—श्लो० शर्करा पृ० ४२; श्लो० न्या० पृ० ५७८, अष्ट० पृ० १७३, सन्मति० टी० पृ० २४३, प्रमेयक० पृ० ४८०; न्याय० वि भा० १. पृ० ४७१; अने० वृ० भा० १. पृ० ६३, स्या० र० पृ० ८०७

१ पृ० १६. का० ४४ 'तस्माद्यो'—उद्धृतेयम्—श्लो० शर्करा पृ० ३८; न्याय० वि० भा० १ पृ० ४७१; अष्ट० पृ० १७३, स्या० र० पृ० ८०७; ईश्वर० वि० भा० १. पृ० २९०

पृ० १७ का० ४५ 'एकस्य' उद्धृतेयम्—न्यायम० भा० १. पृ० ८७, २७७; श्लो० शर्करा० पृ० २४; अभि० आ० पृ० १५२, त० श्लो० पृ० ४०५, सन्मति० टी० पृ० ५०७; प्रमेयक० पृ० २३६, न्यायकु० पृ० ५२४, न्याय० वि० भा० २ पृ० १६९, २००, स्या० र० पृ० ५३४।

पृ० १७ प० ८ 'उक्तम्' द्रष्टव्यम्—पृ० १३ प० १९।

पृ० १७ का० ४६ 'नो चेद्' उद्धृतेयम्—श्लो० शर्करा पृ० २४, प्रमेयक० पृ० ४७०। स्या० र० पृ० ७३१, सन्मति० टी० पृ० ५०७।

पृ० १७ का० ४७ 'तस्माद्' उद्धृतेयम्—श्लो० शर्करा० पृ० २४, त० श्लो० पृ० ४०५, न्यायक० पृ० २०८, न्याय० वि० भा० १ पृ० १०, ६९, ११८, ५०४, भा० २ पृ० १५२, ३६१। अष्ट० पृ० १५३; स्या० र० पृ० ५३४

पृ० १८. प० ५ 'उक्तम्' द्रष्टव्या वृत्ति —का० ३५।

पृ० १८ का० ४९ 'तस्माद्' उद्धृतेयम्—श्लो० शर्करा पृ० ४६।

पृ० १८. का० ५० 'क्वचित्' उद्धृतेयम्—अष्ट० पृ० १४१।

पृ० १८ का० ५२ 'यावन्तो०' उद्धृतेयम्—ईश्वर० वि० भा० ३ पृ० १२७, २००।

पृ० १८ का० ५३ 'अन्यथैकेन' उद्धृतेयम्—श्लो० शर्करा पृ० २५; सन्मति० टी० पृ० २२०

पृ० १९ का० ५४ 'षष्ठ्यादि' अत्र वैशेषिकमत निर्दिष्टम्। उद्धृतेयम्—न्यायम० भा० १ पृ० २७७; न्याय० ता० पृ० ८९।

पृ० १९. का० ५४ 'मानोपा०' उद्धृतेयम्—अष्ट० पृ० १५२।

पृ० १९ प० १४ 'धीर्गाहि' अशुद्धमेतत्। 'धीर्ग्राहि' इति शुद्धम्।

पृ० १९ का० ५५ 'सर्वा०' उद्धृतेयम्—न्यायम० भा० १ पृ० २७७, न्याय० ता० पृ० ९०।

पृ० १९ का० ५६ 'धर्मो०'—उद्धृतेयम्—अष्ट० पृ १५२।

पृ० १९ प० २८ 'गृह्येत' अशुद्धमेतत्। 'गृह्येत' इति शुद्धम्।

पृ० २० का० ५७ 'एको०' उद्धृतेयम्—न्याय० ता० पृ० ९०। अष्ट० पृ० १५२।

पृ० २० प० २१ 'न प्रत्यक्ष' इत्यादि वाक्यमुद्धृतम्—अनेकान्तज० भा० १ पृ० २००।

पृ० २० का० ६० 'प्रत्यक्षेण' उद्धृतेयम्—श्लो० शर्करा पृ० २५।

पृ० २० का० ५९ 'यत्र' उद्धृतोऽयमंश—सन्मति० टी० पृ० ३८२।

पृ० २१ का० ६१ 'तत्रापि' उद्धृतेयम्— त० श्लो० पृ० १०९।

पृ० २२ प० १३ 'प्रत्यायविष्याम' द्रष्टव्या का० १५९।

पृ० २२. प० ३२ 'उक्तमत्र' द्रष्टव्या वृत्ति —का० २६।

पृ० २३ प० १५ ''विकरण्ड' अशुद्धमेतत्। 'विकरण्ड' इति शुद्धम्।

पृ० २३ प० १५ 'वक्ष्याम' अनन्तरमेव इति शेष।

पृ० २४ प० ११ 'अदृष्टा०' इत्यादिवाक्य दिङ्नागस्य—क० टी० पृ० १६५।

पृ० २४ का० ७० 'परकृपम्'—उद्धृतेयम—अनेकान्तज० भा० १ पृ० ३४७, न्याय० वि० भा० १ पृ० ४८०, भा० २ पृ० ४९। व्यो० पृ० ६८०, बृहतीप० पृ० ५२,

पृ० २४ का० ७१ 'तथा'—उद्धृतेयम्—अनकान्तज० भा० १ पृ० ३४७, न्याय० वि० भा० १ पृ० ४८० भा० २ पृ० ४९। व्यो० पृ० ६८०, बृहतीप० पृ० ५२

पृ० २४ का० ७२ 'तस्या' उद्धृतेयम्—अनकान्तज० भा० १ पृ० ३४७, व्यो० पृ० ६८०; बृहतीप० पृ० ५२।

पृ० २६ का० ७५ 'एक०' उद्धृतेयम—न्याय० वि० भा० १ पृ० ४८०, भा० २ पृ० ५१।

पृ० २६ का० ७३ 'अवस्थ' उद्धृतेयम्—व्यो० पृ० ६८०।

पृ० २६ का० ७३ 'शास्त्र०' उद्धृतोयमंश—ईश्वर० वि० भा० १, पृ० २५०।

पृ० २६ का० ७६ 'अवरादि' उद्धृतेयम्—न्याय० वि० भा० १ पृ० ४८०, श्लो० शर्करा पृ० ८, २६।

पृ० २७ प० १५ 'बाह्या इव' अशुद्धमेतत्। 'बाह्य इव' इति शुद्धम्।

पृ० २७ प० १५ 'व्यवहारीणाम्' अशुद्धमेतत्। 'व्यवहारिणाम्' इति शुद्धम्।

पृ० २८ का ७८ 'तत्त्व' उद्धृतेयम्—न्याय० वि० भा० १ पृ० ४८१।

पृ० २८ का० ७९ 'तस्या' उद्धृतेयम्—न्याय० वि० भा० १, पृ० ४८१; न्याय-क० पृ० १९३।

पृ० २८ का० ८० 'अर्था' उद्धृतेयम्—न्याय० वि० भा० १ पृ० ४८२।

पृ० २८ का० ८१ 'स एव'—उद्धृतेयम्—न्याय० वि० भा० १ पृ० ४८२।

पृ० २८ का० ८२ 'स च'—उद्धृतेयम्—न्याय० वि० भा० २ पृ० ९२।

पृ० २९ का० ८६ 'यया' उद्धृतेयम्—श्लो० शर्करा पृ० ९४।

पृ० २९ का० ८९ 'संसृज्यन्ते'—उद्धृतेयम्—न्याय० वि० भा० १ पृ० ४७८; सन्मति० टी० पृ० २१० ईश्वर० वि० भा० २ पृ० ३८६

पृ० २९ का० ९१ 'ग्राह्यो' क० टीकानुसारी पाठ 'ग्राह्यम्' इति। क० टी० निर्दिष्ट पाठान्तरम्—'ग्राह्यो' इति।

पृ० २९ का० ९२–९३ 'समान' उद्धृत—ईश्वर० वि० भा० १ पृ० ११४।

पृ० ३२ प० १९ 'यु(उ)क्तम्'—द्रष्टव्या का० ७९।

पृ० ३३ प० ९ 'वक्ष्याम' द्रष्टव्य प्र० का० २ २१२ त।

पृ० ३४ का० १०८ 'प्राप्तै' असुद्धमतत्। 'प्राप्तौ' इति शुद्धम्।

पृ० ३६ का० १०९ 'प्रतिभासो' उद्धृतोयमत —न्याय० वि० भा० २ पृ० ५०।

पृ० ३६ का० १११ 'एकप्रत्य' उद्धृतेयम्—न्यायम० भा० १ पृ० २७६; न्यायक० पृ० ३१९, प्रमेयक० पृ० ४१७, न्याय० वि० भा० १ पृ० ५२८। स्फो० टी० पृ० २२७, स्या० र० पृ० ७३१।

पृ० ३६ प० २५ 'निवेदितम्'—द्रष्टव्या—का० ४२ त।

पृ० ३८ का० ११८ 'कथ ज्ञाता वृक्षार्थग्रहणावृते' इति कर्णगोमिसमत पाठ। अत्रत्यो मुद्रितपाठस्तु कर्णगोमिना पाठान्तरत्वेन निर्दिष्ट —क० पृ० २३४।

पृ० ३९ का० १२१ 'एक' उद्धृतेयम्—ईश्वर० वि० भा० १ पृ० २९९

पृ० ३९ का० १२२ 'भावो' अत्र 'भावो' इति पाठापेक्षया क० म० समत 'भात' इति पाठ सम्यक् प्रतिभाति।

पृ० ४० का० १२८ 'प्रोक्त'—'शब्दोऽर्थान्तरनिवृत्तिविशिष्टानेव भावानाह' इति दिङ्नागवाक्य विवक्षित्वा आचार्यधर्मकीर्ति आह—'प्रोक्त' इति। क० टी० पृ २४९, म० टी० पृ० ३३१।

पृ० ४१ प० ५ 'अर्थान्तर' इत्यादिवाक्यम् आचार्यदिङ्नागस्य—क० टी० पृ० २५१, म० टी० पृ० ३३१

पृ० ४१ प० १३ 'तद्वयावृत्त्या' इति वाक्य दिङ्नागस्य क० टी० पृ० २५३।

पृ० ४२ प ४ 'प्राग्' द्रष्टव्या वृत्ति का० ६६।

पृ० ४० का० १३६ 'प्रोक्ता' 'अपोह शब्दलिङ्गाभ्या प्रतिपाद्यते" इति ब्रुवता दिङ्नागेन इति शेष —म० टी० पृ० ३३४। क० टी० पृ० २६२।

पृ० ४२ प० २३ 'प्रणेता' दिङ्नाग इति शेष —क० टी० पृ० २६२।

पृ० ४३ प० ८ 'योगि' वैशषिकोशाभिप्रेत ।

पृ० ४३ का० १४१ 'यद्रूपम्' उद्धृतेयम्—श्लो० शर्करा पृ० २५, श्लो० न्या० पृ० ५६७ ।

पृ० ४४ प० ९ 'प्रतिबद्धम्' इति प्रतौ किन्तु 'प्रतिबन्धम्' इति शुद्धम् ।

पृ० ४४ प० १२ 'प्राक' द्रष्टव्या—का० ४२ त ।

पृ० ४५ प० १६ 'समवाय' "अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवाय" प्रशस्त० पृ० ३२४ ।

पृ० ४७ प० १९ 'निवेदितम्' द्रष्टव्य पृ० ३३ प० १४ ।

पृ० ४७ प० २४ 'उक्तमत्र' द्रष्टव्या वृत्ति का० १४६ पृ० ४५ ।

पृ० ४८ प० २२ 'उक्तोत्तरम्' द्रष्टव्यम्—पृ० ४५ ४७ ।

पृ० ५० का० १५४ 'न याति' उद्धृतेयम् ईश्वर० वि० भा० ३ पृ० १६०, व्यो० पृ० ६८२, स्यामा० वृ० पृ० ९६ सम्मति० टी० पृ० ६९१ । तुलना कर्त्तव्या—न्यायम० भा० १ पृ० २७४ । स्या० र० पृ० ९५५

पृ० ५० का० १५६ 'यत्रासौ' उद्धृतेयम् सन्मति० टी० पृ० ६९१, व्यो० पृ० ६८२

पृ० ५१ का० १५८ 'जाति' उद्धृतेयम्—न्याय० वि० भा० १ पृ० २४६ ।

पृ० ५२ का० १६१ 'नायक्तम्' अशुद्धमेतत नायुक्तम् इति शुद्धम् ।

पृ० ५३ प० २० 'उक्तम्' द्रष्टव्या का० ७५ ।

पृ० ५५ प० ५ 'वक्ष्याम' द्रष्टव्यम्—प्र० वा० २ ३ ।

पृ० ५६ प० २२ 'न ब्रूम' उद्धृतमिदं वाक्यम्—अनेकान्तज० भा० २ पृ० १६१

पृ० ५८ का० १७६ 'भेदे' उद्धृतेयम्—सन्मति० टी० पृ० ३०१

पृ० ५८ का० १७७ 'भदोप्य०' अत्र टिप्पण्यां यत् पाठान्तरं निर्दिष्टम् तत् संशोध्य एवं रूपं करणीयम्—'भदोप्यस्ति क्रियातश्चेत् न कुर्युः सहकारिणः' क०

पृ० ५९ प० १८ 'आचार्येण' आचार्यदिङ्नागकृत सामान्यपरीक्षान्तर्गत निराकरण-मत्राभिप्रेतम् क० टी० पृ० ३३७ ।

पृ० ५९ का० १८४ 'सर्वस्यो०' उद्धृतेयम्—अष्ट० पृ० ९२, अनेकान्तज० भा० १ पृ० २३, न्याय० वि० भा० १ पृ० १७७, भा० २ पृ० २३३, न्यायकु० पृ० ६२०, सन्मति० टी० पृ० २४२, स्या० र० पृ० ८३७ ।

पृ० ६० का० १८५ अथास्त्य०' उद्धृतेयम्—न्याय० वि० भा० १ पृ० १७७, भा० २ पृ० २३३ । अनेकान्तज० भा० १ पृ० २४, सन्मति० टी० २४२ ।

पृ० ६० का० १८६ 'सर्वात्मत्वे' उद्धृता—अनेकान्तज० भा० १ पृ० २५ ।

पृ० ६२ प० १२ 'प्रमाण०' दिङ्नागस्य वाक्यमिदम्—क० टी० पृ० ३५० ।

पृ० ६२ का० १९० 'भावो०' उद्धृतेयम्—न्याय० वि० भा० २ पृ० १५। स्या० र० पृ० ५४१

पृ० ६२ का० १९१ 'उपात्त' उद्धृतयम्—न्याय० वि० भा० २ पृ० १५।

पृ० ६३ का० १९३ 'नासिद्ध' उद्धृतेयम्—न्यायम० भा० १ पृ० ११६, न्याय० वि० भा० २ पृ० १३। स्या० र० पृ० ५४३, सन्मति० टी० पृ० ४८७, ५६२

पृ० ६३ प० २४ 'उक्तम्'—द्रष्टव्या वृत्ति का० ६३-६४।

पृ० ६८ प० १० 'प्राक' द्रष्टव्या का० ६।

पृ० ६८ प० १४ 'प्राग'—द्रष्टव्य पृ० ६७ प० ११।

पृ० ६९ प० २५ 'वदयाम'—द्रष्टव्यम—प्र० वा० ४ २६९।

पृ० ६९ प० २८ 'मूढो' द्रष्टव्यम्—प्र० वा० ४ २६३-२६७।

पृ० ६९ प० ३० 'स एव' इत्याशङ्का उद्द्योतकरस्य—क० टी० पृ० ३८२।

पृ० ६९ प० ३० 'वदयाम'—द्रष्टव्यम्—प्र० वा० ४ २७३-२७५।

पृ० ७० प० ४ 'स्मार्यते'—द्रष्टव्यम् प्र० वा० ४ २६७।

पृ० ७० प० ५ 'न सन्ति' इत्यभिप्राय आचार्यदिङ्नागस्य—क० टी० पृ० ३८३; म० टी० पृ० ३६०।

पृ० ७० का० २०८ 'अनादि' उद्धृतेयम्—त० श्लो० पृ० १४४। अष्ट० पृ० ११४,२५०। ईश्वर० वि० भा० २ पृ० ४००।

पृ० ७० प० १२ 'निवेदितम्'—द्रष्टव्या का० ६८।

पृ० ७० का० २१० 'परमार्थे०' उद्धृतयम्—शास्त्रवा० का० ६४७; अष्ट० पृ० १६८, न्यायकु० पृ० ५५४, न्याय० वि० भा० २ पृ० ३२०, स्या० र० पृ० ७१०।

पृ० ७० का० २११ 'अतीता०' उद्धृतेयम्—शास्त्रवा० का० ६४८।

पृ० ७१ प० १८ 'कल्पितस्य' इत्यादिवाक्य दिङ्नागस्य—क० टी० पृ० ३८८, म० टी० पृ० ३६२

पृ० ७१ प० २० 'उक्तमत्र' द्रष्टव्या का० २०२।

पृ० ७२ का० २१८ 'प्रत्यक्षेण'—तुलना—आप्त० का० ६।

पृ० ७२ का० २१९ 'आप्त०' उद्धृतेयम—न्यायम० भा० १ पृ० १४०।

पृ० ७२ का० २१९ 'अभिहिता०' आचार्यदिङ्नागेन इतिस्रप। —क० टी० पृ० ३९३, म० टी० पृ० ३६४।

पृ० ७२ प० २९ 'वक्ष्यमाण०' द्रष्टव्यम्—प्र० १ १४८

पृ० ७३ प० १ 'हेत्वर्थवि०' अशुद्धमतत। ०हेत्वर्थवि० इति शुद्धम्।

